*indrādayo'pi yasyāntaṁ na yayuḥ śabdavāridheḥ /*
*prakriyām tasya kṛtsnasya kṣamo vaktuṁ naraḥ katham //*[8]

We too agree with him.

The Nighaṇṭuśeṣa is really a useful addition to the Nighaṇṭus. One should study it critically. The study of the popular names occurring in it will be very useful and fruitful fo the students of this subject. The eight Appendices prepared by the learned editor Muni Shri Punyavijayaji have enhanced the value of this edition. He is really a great research scholar who has edited many important Sanskrit and Prakrit works. Gujarat is proud of him.

Surat
28-5-68.

**Bapalal Vaidya.**

8. Introduction to 'Rājanighaṇṭu-sahito Dhanvantarīyanighaṇṭu' (Ānandāśrama Sanskrit Series).

॥ अर्हम् ॥

# निघण्टुशेषस्य विषयानुक्रमः ।



---

१ रतांजणी ॥ २ पतग ॥ ३ कणयर ॥ ४ एलची ॥ ५ बृहदेला, कंकोलीफल ॥ ६ कंकोल ७ पीपल ॥ ८ पींपरी ॥ ९ काळुम्बरी ॥ १० चारु । ११ थोहरी ॥ ९ १२ करणा ॥ १३ तिन्तिडीक १४ अम्लवेतसतु क्षमिर्बासः ॥

---

१ आसदा ॥ २ अरेंजु ॥ ३ शाल्मलिविशेष ॥ ४ शिंशपाविशेष ॥ ५ खेजडी ॥ ६ सांगर ॥ ७ हिंगोट ॥ ८ कांक ॥ ९ किरमालउ ॥ १० सागु ॥ ११ अर्जुन ॥ १२ महाकोल्हु ॥ १३ गुंदी ॥

---

१ मयणहल ॥ २ इजर, वेतेमविशेष ॥ ३ भीलामा ॥ ४ बकायणि ॥ ५ अखोड ॥ ६ रोहीडउ ॥ ७ कायफल ॥ ८ अरडूसा ॥ ९ पद्मनस ॥ १० गागेटी ॥ ११ थूणीयउ ॥ १२ पीक ॥

१ रींगणी ॥ २ वृद्धरींगणी ॥ ३ भाझाभाडा ॥ ४ साटहडा ॥ ५ साटहडी ॥ ६ मालकांगुणी ॥ ७ हलद्र ॥८ मोरथेरी ॥९ बावची ।।१० धमासड ॥ ११उपलोठ ॥ १२ एलीयव ॥ १३ जूही ॥ १४ सुवर्णजूही ॥ १५ केवडो ॥ १६ सेवंत्री ।

१ शंखाहुली ॥ २ जवासी ॥ ३ मोहाली ॥ ४ तालीसपत्र ॥ ५ [illegible] ॥ ६ एकांगी ॥ ७ पद्म ॥ ८ जंतुवार ॥ ९ कायरी ॥ १० हंसपदी ॥ ११ कूभ ॥ १२

१ उत्पलशारिवा ॥ २ चन्दनशारिवा ॥ ३ पीलुडी ॥ ४ राडागारी ॥ ५ देवदाली ॥६ उंदिरकनी ॥ ७ पोयणी ॥८ श्वेतकमल ॥९ श्वेतजीरा ॥ १० आधरि ॥ ११ भांगरउ ॥१२ कासंदर ॥ १३ दोडी ॥१४ आंबउत्री ॥१५ तंदुलेजा ॥ १६ खडकुतिर ॥१७ बृहन्मूलक ॥१८ कारेली ॥

१ कंकोडा ॥ २ गन्धतृण ॥ ३ काकरडुके ॥ ४ उशीर ॥ ५ मोठ ॥

१ जुवार ॥ २ श्यामतिल ॥ ३ श्वेततिल ॥ ४ कृष्णसर्षप राजसर्षप ॥

## शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १ | १८ | –प्रकाराःपराः | प्रकाराः परा– |
| ४ | शीर्षके | सटीकेनि घण्टु– | सटीके निघण्टु– |
| १५ | २६ | –पणिक– | –पर्णिक– |
| १६ | १ | पुक्लीब– | पुं-क्लीब– |
| १६ | ३ | रमुक् | "रमुक् |
| १६ | ४ | "पदि— | "पदि– |
| १९ | ७ | आह च— | आह च—<br>[करवीरोऽश्वहाऽश्वघ्नो<br>हयमारोऽश्वमारकः ।] |
| २० | ४ | छदम् । | छदम् ।<br>[राम तापसजं वासो<br>गोपनं वस्त्रमशुकम् ॥] |
| २७ | २७ | फलयु० | फलयू० |
| ३० | २ | –पुष्पी | –पुंष्पी |
| ३९ | ४ | –जिविका | –जीविका |
| ४३ | ३ | भल्लकी वृक्षः | भल्लुकीवृक्षः |
| ४४ | २४ | क'इर' | ³'कइर' |
| ४६ | १३ | भु(भ)वने | भवने |
| ४७ | ६ | सवर्तक. | सवर्तक |
| ४७ | २६ | बहेडा' | 'बहेडा' |
| ५३ | २३ | २ | ३ |
| ५४ | १० | –त्वग | –त्वग् |
| ५५ | ८ | –पत्रो युग्मपत्रोऽवहु– | –पत्रोऽयुग्मपत्रो बहु– |
| ५६ | ४ | –शाम्बी | –शिम्बी |
| ५७ | १ | पतीसाल | पीतसाल. |
| ६१ | ४ | –महा देव– | –महा-देव– |
| ६१ | १४ | इन्द्रद्रुमः स्वर्ग– | इन्द्रद्रुमः स्वर्ग– |
| ७५ | २८ | त्रिवु | त्रिपु |
| ७७ | १४ | गुल्मारि- | गुल्मारि– |
| ८१ | २० | कैडर्या | कैडर्यो |
| ८४ | २९ | ०नि | नि० |
| ८८ | १२ | –माताऽट | –माताऽऽट– |
| ९१ | १ | ङ. | ङ |
| ९१ | २९ | –स्वाङ्गवे– | –स्वा गवे– |
| ९६ | ९ | मङ्गलं | मङ्गल¹ |
| ९६ | २४ | पीतेरक्तम्चाहेन्च | पीतैरक्तम्चारुन्च |

| | | | |
|---|---|---|---|
| ९८ | २३ | –केयम् । | –केयम्— |
| ११० | २१ | पृष्णिपर्णी | पृष्णिपर्ण्या |
| ११२ | २७ | चित्र॰ | चित्रो॰ |
| ११४ | ११ | वर्ग ५ | वर्ग १ |
| ११५ | २८ | क्रर– | क्रूर– |
| १२१ | ३ | –सूत्रणे | –सूत्रेण |
| १३१ | १३ | गो– | "गौ– |
| १३६ | १५ | वलिम द्वीपि– | वलिम-द्विपि– |
| १४२ | १ | सित | सिते |
| १४७ | १७ | वर्ग २ | वर्ग १ |
| १४७ | २८ | –भृच्चि॰ | –भिच्चि॰ |
| १४९ | २४ | दीषमूला | दीर्घमूला |
| १५९ | ४ | –वर्णाऽधरा– | –वर्णा धरा– |
| १६१ | २३ | द्वीपशत्रु– | द्विपिशत्रु– |
| १६३ | ७ | नाम्ना(?)रास्ना | नाम्ना |
| १६३ | १२ | कपिकच्छूरात्म– | कपिकच्छ्वामात्म- |
| १६८ | ११ | चैन्द्री | त्वैन्द्री |
| १६८ | १८ | वान्तो | वान्तो |
| १६९ | २७ | [धन्व०वर्ग२श्लो०३] | ० |
| १७५ | ९९ | काञ्चनी क्षीरी | काञ्चनक्षीरी |
| १८० | ३ | पद्मनाक | पद्मनाल |
| १८१ | २२ | शेवलं | शेवाल |
| ,, | ,, | शेवलं | शेवलं |
| १८३ | ६ | कणाऽऽख्याता | कणा ख्याता |
| १८३ | १६ | कुञ्चिका | ञ्चिका |
| १९१ | २० | श्रीवराक (श्रीवारक)। | श्रीवारक |
| ,, | २३ | ,, | ,, |
| १९४ | २६ | 'लबुह् | लबुह् |
| १९७ | ७ | वर्ग१ | वर्ग२ |
| १९७ | १० | तुण्डा | तुण्डी |
| १९८ | २५ | –कटुम्बके | कुटुम्बके |
| १९९ | ३० | सारीवानी रजो | सारी वानीरजो |
| २०२ | १६ | इक्षुकाण्ड· | इषु काण्डः |
| २०५ | ३ | इत्याहः | इत्याह |
| २१५ | २७ | म० | मि० |
| २१६ | १५ | उमा तु | उमाय |

॥ जयन्तु वीतरागाः ॥

आचार्यश्रीहेमचन्द्रसूरिविरचितः

# निघण्टुशेषः ।

**वाचनाचार्यश्री-श्रीवल्लभगणिविनिर्मितया टीकया समेतः ।**

**[ प्रथमो वृक्षकाण्डः ]**

॥ ऐँ नम ॥ श्रीगुरुभ्यो नम ॥

सिद्ध शब्दसमुच्चय शुचितरो यस्माद् भवद्विस्मयो,
निस्संगीतिसुशान्तिसातसहितः श्रेयांसि स स्राक् क्रियात् ।
यज्ज्ञानाम्बुदसद्रसेन रसवान् ख्यातश्च वानस्पतो,
वर्गो वल्गुगुणो विराजति भुवि **श्रीवर्धमानो** जिनः ॥१॥ 5

**वाग्देवतां** स्तौमि सदा प्रसन्नां, सन्नाऽतिकुज्ञानभरामुदाराम् ।
विद्यार्थिनां पानकृते कृतार्थां, पीयूषकुम्भं दधतीं करेण ॥२॥

यद्वक्त्रोद्भूतचञ्चद्वचनरससुधालोलुपो भव्यभावः,
सेवां कुर्वन्निवास्ति प्रमुखमुखमिषाच्चन्द्रमाश्चन्द्रिमाढ्यः ।
दार्ढ्याऽगूढप्रतिज्ञाजितकविधिषणा भूरिकालं धरायां, 10
नन्दन्तु श्रीवर**ज्ञानविमल**गुरवः सुध्युपाध्यायमिश्रा ॥३॥

**निघण्टुशेषस्य** करोमि **टीकां**, किंज्ञोऽप्यहं स्वीयगुरुप्रभावात् ।
शास्त्राण्यनेकानि विमृश्य दृष्ट्वा, चाहर्निशं स्वीयसुबुद्धिवृद्ध्यै ॥४॥

इह हि चतुरुदधिवलयितवसुमतीमण्डलमण्डनायमानसुमानषड्दर्शनवादिमदोन्मादि-द्विरदप्रकटघटागञ्जनसिंहोपमान-महनीयमहिम**शब्दानुशासना-ऽभिधानकोष**सत्य(?)साहि- 15 त्याद्यनेकपवित्रशास्त्रविधानसावधानतावाप्तकविकुलगरिमप्राग्भाराः प्रथितावितथात्मनीनपञ्चज-नीनसमीचीनगुणगणजनितसकलप्रबलसुजनसमाजचमत्काराः श्री**पूर्णतल्ल**गणगगनाङ्गणसमल-ङ्करणसहस्रकिरणश्रमणगणशिरश्चूडामणिकरणिश्री**देवचन्द्रसूरि**चरणकमलचञ्चरीकप्रकाराः परा-जितास्खर्वप्रतिज्ञासुपर्वसूरयः श्री**हेमचन्द्रसूरयः** प्रचिकंसितशास्त्रविधानसमये प्रवर्त्तमानाः श्रेयस्काम्ययाऽभीप्सितप्रशस्तदेवतानमस्काराचरणादिमङ्गलं दुरपोहप्रत्यूहसन्दोहव्यपोहनाय

प्रचिकीर्षितनिघण्टुशेषाख्यशास्त्रसमाप्तिविधानाय सागशिष्टाचारसमाचरणाय च प्रथमपद्येन प्रतिपादयन्ति स्म । तद्यथा -

**विहितैकार्थ-नानार्थ-देश्यशब्दसमुच्चयः ।**
**निघण्टुशेषं वक्ष्येऽहं नत्वाऽर्हत्पदपङ्कजम् ॥१॥** इति ।

5 अत्राहुरपरे—ननु प्रस्तुतशास्त्रकरणमवगणय्य किमर्थमादावेवोचितदेवतानमस्क्रियाऽऽविष्क्रिया ? । विघ्नोपशमार्थमिति चेत्, न, किं नमस्कारादेव विघ्नोपशम ? उताऽपरस्मादपि ?। यद्याद्य कल्पस्तर्हि किं यत्र यत्र नमस्कारस्तत्र तत्र विघ्नोपशम ? किं वा यत्र यत्र विघ्नोपशमस्तत्र तत्र नमस्कार. ? । तत्र नाऽऽद्यो निरवद्य , कादम्बर्यादौ विद्यमानेऽपि नमस्कारे परिसमाप्त्यभावेन तदनुपलम्भात् । अभिधानकोषेष्वेवाय नियम इति चेत्, न, तेष्वपि 10 कुत्रचिन्नमस्कारपुरस्कारेऽप्यपरिसमाप्त्युपपत्ते. । द्वितीयपक्षोऽपि सूक्ष्म , **मीमांसाभाष्यादौ** विघ्नोपशमोपलम्भेऽपि तत्प्रारम्भे नमस्कारानाविष्कारात्, तस्य तु तत्समाप्त्यैव निर्णीतत्वात् । किञ्च—'नमस्कारादेव' इत्यत्रैवकारो नमस्कारेण सम विघ्नोपशमस्यान्ययोगव्यवच्छिनत्ति, स च प्रागुक्तव्यभिचारयुक्त्या न प्रमाणकोटीमाटीकिष्ट । नाप्यपरस्मादपीति पक्ष सूपपाद, सर्वत्रापि निश्चयेन तदुपादानस्यैव विलोक्यमानत्वात् । श्रद्धा 15 अपरस्मादपि साध्यसिद्धौ प्रेम्णा तस्यैवोपादानं बाललीलायितं कल्पयेत् । अपि च—नमस्कारादित्यत्रापादानोपादानं विघ्नोपशमं प्रति नमस्कारस्य निमित्तत्वं जनकत्वेन व्यञ्जकत्वेन वा व्यनक्ति ? । जनकत्वेन चेत्, तर्हि किं नित्योऽनित्यो नित्यानित्यो वा स तज्जनकत्वेन तवाऽभिप्रेतः ? । नित्यश्चेत्, न, नित्यस्य जनकत्वानुपपत्ति., शश्वदेकस्वभावात् । पूर्वं पश्चाच्च अतज्जनकत्वे शास्त्रारम्भे एव तज्जनकत्वे 20 चैकस्वभावहान्या नित्योऽप्यनित्यतां सत्यापयेत्, "अप्रच्युता-ऽनुत्पन्न-स्थिरैकरूपं नित्यम्" [ ] इति नित्यलक्षणात् । सहकारिकारणजनितसाहाय्यात् तज्जनको भविष्यतीति चेत्, न, सहकारिकारणस्य तत्साहाय्यकारित्वेनाद्याप्यप्रसिद्धत्वात् । प्रसिद्धत्वे वा तत्साहाय्यस्य भेदाऽभेदोभयैर्भेत्तुं शक्यत्वात् । न च नमस्कारोऽनित्यः, शास्त्रारम्भे शास्त्रकारैरवश्यं विधीयत इति भवताऽभ्युपेतत्वात् । अनित्यस्तज्जनक इति चेत्, 25 न, अनित्य. किं कतिपयक्षणावस्थायी ? क्षणस्थायी वा ?। प्राच्ये क्रियारूपत्वान्नमस्कारस्य तथात्वं प्रतिपत्तुमशक्तिः, क्रियायाः क्षणविनाशित्वात् । द्वितीये स्वोत्पत्तिमात्रव्यग्रस्य क्षणिकस्य तज्जननं प्रति अभविष्णुतैव, स्वोत्पत्तेः प्राक् पश्चादुत्पत्तिसमये एव वा क्षणिक. कार्यं कुर्यादिति विकल्पजालेन प्रत्यवस्थातु शक्यत्वात् । कथं क्षणिको वा

१ °त्पाद° मि० ॥

नमस्कार. कालभूयस्त्वभाविनीं शास्त्रसमाप्तिं यावत् तिष्ठेत् 'तत्प्रत्यूहसन्दोहं व्यपोहेच'।
नापि नित्यानित्य., परस्परपक्षोपक्षिप्तदूषणगणावकीर्णत्वात् । तदुक्तम्–

प्रत्येकं यो भवेद् दोषो द्वयोर्भावे कथं न सः '।

[ ] इति ।

नापि व्यञ्जकत्वेन, तस्य तद्व्यञ्जकत्वेन त्वयाऽद्याप्यप्रसाधितत्वात् । किञ्च– 5
नमस्कारात् कस्य प्रत्यूहस्य व्यपोहः ' किं भूतस्य भविष्यतो वर्तमानस्य वा '। न तावदाद्य-
विकल्पद्वयस्य, तस्याऽतीतानागततया व्यपोहितुमसमर्थत्वात् । वर्तमानस्य किं सतोऽसतो
वा ' । न तावत् सत , तस्य भोग्यत्वेनोपसेदुषः परःशतामिर्नमस्याभिर्दुरपोहत्वात् ।
असतस्त्वसत्त्वादेव तदपोहानुपपत्तिः । अन्यच्च–यदि नमस्कार एव प्रत्यूहव्यपोहकः
स्यात् तदा प्रत्यूहसन्दोहदन्दह्यमानो जनो नमस्कारैस्तं व्यपास्य को न स्वं सुखा- 10
चेक्रियात् ' । ततो विघ्नोपशमार्थं नमस्कार इति यत्किञ्चिदेतत् । अत्र प्रतिविधीयते—

यदवादि 'प्रस्तुतशास्त्रकरणमवगणय्य नमस्कारकरणं किमर्थम् '' इत्यादि तदेतत्
सर्वं तवाऽप्रामाणिकतामेव प्रवीणयति । न खलु प्रामाणिकीभूय कश्चिद विपश्चिच्छास्त्रा-
रम्भसम्भावित नमस्कारं तिरस्कुर्वीत, शास्त्रारम्भे शास्त्रकारैस्तस्यैव प्रस्तुतत्वात् ।
यच्चावाचि 'किं नमस्कारादेव विघ्नोपशम ' ' इत्यादि तदप्यसूपपादम्, यतो नम- 15
स्कारादेव न वय विघ्नोपशममभिदध्महे, किन्तु तज्जनितनिर्मलधर्मादेव । स
चाऽभीष्टदेवताप्रणिधानाद्यनेकसर्वविवेकव्यापारसाध्य. । अत एव यत्र क्वापि विघ्नोपशम-
स्तत्राऽवश्यं मानसप्रणिधानाद्युत्पन्नधर्मस्यैव हेतुत्वम्, कार्यवैशिष्ट्यगम्यत्वात् कारण-
वैशिष्ट्यस्य । यत्र तु तत्सद्भावेऽपि विघ्नसद्भावस्तत्र धर्मा-ऽधर्मयोरल्पीयस्त्व-बलीयस्त्वे
हेतू, बलीयसाऽल्पीयसो धर्षणात् । एतेन नित्याऽनित्याद्यनल्पविकल्पजालमपि प्रति- 20
क्षिप्तमवसेयम् । यत —क्रियारूपत्वेनानित्योऽपि नमस्कारो धर्मं विनिर्माय विनश्यति,
स चाशेषविघ्नविघातनिघ्नो भवति । तथा च प्रतिपादयाञ्चकार श्रीकन्दलीकारः–
"स हि धर्मोत्पादकस्तिरयत्यन्तरायबीजम्" [ ] इति । व्यञ्जक-
पक्षस्य त्वस्वीकार एव परीहार । यदप्याचचक्षे विचक्षणेन 'नमस्कारात् कस्य
प्रत्यूहस्य व्यपोहः '' इति, तदप्यल्पीय., वर्तमानस्यैव तस्य धर्मेण तिरस्करणात् । 25
न च वाच्यम्–कथं वर्तमानस्तिरस्क्रियते ' इति, उद्दण्डप्रचण्डमुद्गरदण्डादिना विद्य-
मानस्यैव घटादेर्विघटनोपपत्ते । इदमेव च धर्मस्यालङ्कर्मीणत्वम्, यदुपेतमपि प्रत्यूहव्यपोहं
विदधाति, अन्यथा तेनोपकृतं किं स्यात् ' । ततश्चावश्यं शास्त्रप्रारम्भे नमस्कारो
विधेय, प्रमाणप्रतिष्ठितत्वात् । तथाहि –विवादाध्यस्तो नमस्कारः शास्त्रारम्भेऽवश्यं
विधेयः, विघ्नोपशमफलत्वात्, त्रिपुरादिमन्त्रजापवदित्यलं कुचर्चया । प्रस्तुतं प्रस्तुमः–

तत्र 'अहं' हेमचन्द्राचार्य. 'वक्ष्ये' कथयिष्यामि । "ब्रूंगक् व्यक्तायां वाचि" अादादिकोऽयम् उभयपदी इत्यस्य वचादेशे सिद्धम् । कम् ? 'निघण्टुशेषं' "घटि क्यपि युतौ" इति कविकल्पद्रुमधातुपाठः, नितरां घण्टच्यन्ते– एकत्र भाष्यन्ते शब्दा अनेनेति निघण्टुः, "भृ-मृ-तृ-त्सरि-" [ हैमोणादिसू० ७१६ ] इति बहुवचनादुः,
5 पुल्लिङ्ग. । यद् वैजयन्ती–

नामंशास्त्रे निघण्टुर्ना [ ] इति ।

व्याडिस्तु–

अर्थान् निघण्टयत्यस्मान्निघण्टु. परिकीर्तित' ।

पु-नपुंसकयो' स स्यात् [ ] इति ।

10 नन्वयं धातुर्दुत्यर्थे उक्तो धातुपाठे तत् कथं परिभाषणार्थ' ? उच्यते–

क्रियावाचित्वमाख्यातुं प्रसिद्धोऽर्थ. प्रदर्शित. ।

प्रयोगतोऽन्ये ज्ञातव्या, अनेकार्था हि धातव ॥

[ ]

इत्युक्तत्वाद् युक्तेय व्युत्पत्ति । अकारान्तोऽपि निघण्टशब्द । तदुक्तं चामुण्ड-
15 पण्डितेन–

इति वर्णनिघण्टोऽयं बीजाना वच्मि किञ्चन । [ ] इति ।

तदुक्तादतिरिक्त' शेष प्रणिगद्यते । यद्वा शिनष्टि–विशिष्टकृष्टिजनानां प्राचीननिघण्टुवप्रोक्तवनस्पतिनामसमूहेषु ज्ञानोत्पादनं करोतीति शेषः । "शिष् हिंसायाम्" शिष्यते–विचित्रवनस्पत्यभिधानजाड्य हिंस्यते अनेनेति वा शेषः । निघण्टो.– स्वोपज्ञ-
20 नामसंग्रहस्य शेषो निघण्टुशेषस्तम् । किं कृत्वा ? नत्वा, काय-वाङ्-मनोभि प्रणम्येत्यर्थ. । किम् ? 'अर्हत्पदपङ्कजम्' अर्हतां पदपङ्कजम् अर्हत्पदपङ्कजम्, तीर्थकृच्चरणकमलमित्यर्थ' । किंविशिष्टोऽहम् ? 'विहितैकार्थ-नानार्थ-देश्यशब्दसमुच्चयः' एकार्थ.–अभिधानचिन्तामणिनाममालालक्षण', नानार्थ –

"ध्यात्वाऽर्हत. कृतैकार्थशब्दसन्दोहसग्रह ।

25 एकस्वरादिषट्काण्डच्या कुर्वेऽनेकार्थसङ्ग्रहम् ॥" [हैमाने० का. १, श्लो. १]

इत्यादिलक्षण, देश्यशब्दसमुच्चय.–देशीनाममाला, एषां द्वन्द्वे एकार्थ-नानार्थ-देश्यशब्दसमुच्चया, ततो विहिता–विनिर्मिता एकार्थ-नानार्थ-देश्यशब्द-

१ अदा° पु१ ॥ २ "नाममालायाम्' इति पु१ टिप्पणी ॥ ३ विशिष्टविद्वज्जनानामित्यर्थः ॥

समुच्चया येन स विहितैकार्थ-नानार्थ-देश्यशब्दसमुच्चयः । एतेनेदं ज्ञापितं भवति– पूर्वमपूर्वाभिधानचिन्तामणि-शेषसङ्ग्रह-देशीशब्दसङ्ग्रहान् विधायाथ निघण्टुशेषं करोमीत्यर्थः । इति प्रथमपद्यार्थः ॥१॥

**वृक्ष-गुल्म-लता-शाक-तृण-धान्यक्रमादिह ।**
**षट् काण्डानि प्रवक्ष्यन्ते सप्तम्युद्देशपूर्वकम् ॥२॥**　　5

व्याख्या– 'इह' इति निघण्टुशेषे 'षट् काण्डानि' षट् सर्गाः 'प्रवक्ष्यन्ते' प्रतिपादयिष्यन्ते । कथम् ? 'सप्तम्युद्देशपूर्वकं' सप्तम्या–विभक्तिविशेषेण उद्देशः–कथनं सप्तम्युद्देशः, स पूर्वो यस्य तत् सप्तम्युद्देशपूर्वकम्, एवं यथा भवति तथा । कस्मात् ? इत्याह– 'वृक्ष-गुल्म-लता-शाक-तृण-धान्यक्रमात्' वृक्षाश्च प्रतीताः गुल्माश्च सिन्दुवाराद्याः लताश्च गुञ्जाद्याः शाकाश्च शतपुष्पमुख्याः तृणाश्च रौहिषप्रमुखा 10 धान्यानि च पाटलादीनि वृक्ष-गुल्म-लता-शाक-तृण-धान्यानि, तेषां वाचकाः शब्दा अपि वृक्ष-गुल्म-लता-शाक-तृण-धान्यानि, वाच्य-वाचकयोरभेदोपचारात्; तेषां क्रमः– परिपाटी तस्मात् तथा । एतावता वृक्षकाण्डं गुल्मकाण्डमित्याद्युक्तं भवतीति द्वितीयपद्यार्थः ॥२॥

**अशोके श्रीप्रियः शोकनाशनः स्यन्दनोऽलसः ।**　　15
**वञ्जुलो मदनावासः स्त्रीपादाहतिदोहदः ॥३॥**

**हेमपुष्पः कर्णपूरः कङ्केल्लिर्मधुमण्डनः ।**
**पिण्डपुष्पो लतावृक्षः पौलोमी-रोहिणीद्रुमः ॥४॥**

"शु गतौ" न शवति अशोकः, "भीण्-शलि-" [ हैमोणादिसू० २१ ] इति कः; नास्ति शोकोऽस्मादिति वा, "अश्नुते अशोकः" इति तु क्षीरस्वामी, पृषोद- 20 रादित्वात् साधुः, तत्र । स्त्रिय प्रिया यस्य स स्त्रीप्रियः; स्त्रीणां प्रियो यः स इति वा । शोकं नाशयति शोकनाशनः । "स्यन्दौङ् स्रवणे" अन्तस्थीयोपान्त्योऽयम्, स्यन्दते स्यन्दनः, "ध्वसि-रसि-" [ हैमोणादिसू० २६९ ] इत्यनः । "अली भूषण-पर्याप्ति-वारणेषु" अलति अलसः, "तप्यणि-" [ हैमोणादिसू० ५६९ ] इत्यसः; न लसति वा । "वज गतौ" वजति वञ्जुलः, "कुमुल-तुमुल-" [ हैमोणादिसू० 25 ४८७ ] इत्युले निपातनाद 'वजेः स्वरान्नोऽन्त" । मदनः– कन्दर्प आवसत्यस्मिन्निति मदनावासः; मदनस्य आवासः– निवसनस्थानमिति वा । स्त्रिया पादः–चरणः स्त्रीपादस्तेन आहतिः–आहननं सैव दोहदो यस्येति स्त्रीपादाहतिदोहदः । कमनीय-

कामिनीभुजलतावगूहन-पार्ष्णिप्रहार-कटाक्षविक्षेपादिभ्यः प्रसून-पल्लवादिप्रसवदर्शनादेतस्य मैथुनसंज्ञेति **जैनाः** ॥३॥

हेमवर्णानि पुष्पाण्यस्य **हेमपुष्पः** । कर्णौ पूरयति **कर्णपूरः** । क–उदकं केलति–गच्छति **कङ्केलिः**, स्त्रीलिङ्ग । यदमरशेषः– "स्त्रियां त्वशोके कङ्केलिः" 5 [ ] पृषोदरादित्वात् साधु । मधुं- वसन्तं मण्डयति **मधुमण्डनः** । पिण्डाकाराणि पुष्पाण्यस्य **पिण्डपुष्पः** । लताकारो वृक्षो **लतावृक्षः**, लता चासौ वृक्षश्चेति वा **लतावृक्षः** । पौलोम्याः रोहिण्याश्च द्रुम. **पौलोमीद्रुमः रोहिणीद्रुमः** । आह च–

अशोकः शोकनाशश्च विचित्रः कर्णपूरक. ।
विशोको रक्तको रागी चित्रः स्तबकमञ्जरी ॥
10 कङ्केलिर्हेमपुष्पश्च पिण्डपुष्पो लतातरु ।
[ ] इति ।

एतस्य लोके 'अशोक' इति प्रसिद्धि ॥४॥

**बकुले मदिरागन्धः कृष्णत्वग् मद्यदोहदः ।**
**द्राक्षाफलो गूढपुष्पः केसरः सिंहकेसरः ॥५॥**
15 **विशारदो गुडपुष्पः**

"वकुङ् कौटिल्ये" वङ्क्यते पुष्पैर्बकुलः, "स्था-चङ्कि-" [ हैमोणादिसू० ४८६ ] इति उलो न लुक् च "उच्यते वकुल" इति **क्षीरस्वामी**, पृषोदरादित्वात् साधु, "कुमुल-तुमुल-" [ हैमोणादिसू० ४८७ ] इत्युले वा निपात्यते, ... । मदिरावद् गन्धोऽस्य **मदिरागन्धः** । कृष्णा त्वक्-छल्ली यस्य स **कृष्णत्वक्** । 20 मद्यस्य दोहदोऽस्य **मद्यदोहदः** । द्राक्षाकाराणि द्राक्षावन्मृष्टानि वा फलान्यस्य **द्राक्षाफलः** । गूढानि गुप्तानि पुष्पाण्यस्य **गूढपुष्पः** । केसरा सन्त्यस्य **केसरः**, अभ्रादित्वाद. । "के–जले सरति **केसरः**" इत्यपरे । सिंहस्य केसरा इव केसरा अस्य **सिंहकेसरः**, "उष्ट्रमुखादय" [ सिद्ध० ३ १ २३ ] इत्यनेन समासः ॥५॥

विशेषेण शरदि भवो **विशारदः**, "भर्तु-सन्ध्यादेरण्" [ सिद्ध० ६.३.८९ ] 25 इत्यण् । गुडवद् मृष्टानि पुष्पाण्यस्य **गुडपुष्पः** । आह च-

बकुल शीधुगन्धश्च मद्यगन्धो विशारद ।
मधुगन्धो गूढपुष्पः शिवकेसरकस्तथा ॥ [ ] इति ।

१. शिवाके° पु१॥

एतस्य लोके 'बेउल' इति प्रसिद्धिः ।

**फलमस्य तु पर्पटम् ।**

'तुः' पुनरर्थे । 'अस्य' बकुलस्य फलं पृणाति **पर्पटम्**, "कपट-कीकटादयः" [ हैमोणादिसू० १४४ ] इत्यटे साधुः ।

**तिलके पूर्णकश्छन्नकुसुमो मुखमण्डनः ॥ ६ ॥** 5
**चित्रकः क्षुरको रेची स्त्रीनिरीक्षणदोहदः ।**

तिलति– स्निह्यति **तिलकः**, "धु-धून्दि-" [ हैमोणादिसू० २९ ] इति किदकः ; "तिलाभपुष्पस्तिलकः" इति **क्षीरस्वामी**, तत्र । पूर्यते स्म पूर्णः, स्वार्थिके के **पूर्णकः** । छन्नानि–गुप्तानि कुसुमान्यस्य **छन्नकुसुमः** । मुखं मण्डयति **मुखमण्डनः**, नन्द्यादित्वादनः ॥६॥ 10

"चिगृट् चयने" चीयते चित्रः, "चि-मिदि-शंसिभ्यः कित्" [हैमोणादिसू० ४५४] इति कित् त्र प्रत्ययः, चित्र एव **चित्रकः**, स्वार्थिकः कः । क्षुरति–विलिखति **क्षुरकः** , क्षुरस्य तुल्यः **क्षुरक** इति वा परुषत्वात्, "तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः" [ सिद्ध० ७ १.१०८ ] इति कः । "रिचण् विरेचने च" चकारात् सम्पर्चने, रेचयत्यवश्यं **रेची**, "आवश्यके णिन्" ( "णिन् 15 चाऽऽवश्यका-ऽधमर्ण्ये" सिद्ध० ५.४.३६ ) इति णिन् । स्त्रीनिरीक्षणे दोहदोऽस्य **स्त्रीनिरीक्षणदोहदः** । आह च-

तिलकः पूर्णकः श्रीमान् क्षुरकः शतपुष्पकः ।
मुखमण्डनको रेची विटश्चित्रो विशेषकः ॥

[ ] इति । 20

तिलकः परुष श्रीमान् क्षुरकश्छन्नपुष्पकः ।

[ ] इत्यपरः ।

एतस्य लोके 'तिलकु' इति प्रसिद्धिः ।

**कोविदारे भद्रदारुः काञ्चनारो युगच्छदः ॥७॥**
**ताम्रपुष्पश्चमरिकः कुद्दालः कुण्डली कुली ।** 25
**काञ्चनो मालुकापर्णः कुदारः स्वल्पकेसरः ॥८॥**

१. "बकुल" पु२॥ २. °न्नपत्रक. पु२ ॥

कनति—दीप्यते **कोविदारः**, "कने कोविद" [ हैमोणादिसू० ४१० ] इत्यारः प्रत्ययो धातोश्च कोविदेत्यादेश , कुं—भूमिं विदारयतीति वा, पृषोदरादित्वात् , तत्र । भद्रं दारु अस्य **भद्रदारुः** । "कनै दीप्ति-कान्ति-गतिषु" कनति **काञ्चनारः**, "कने. कोविद-कर्बुद-काञ्चनादयश्च" [ हैमोणादिसू० ४१० ] इति आर. प्रत्ययो 5 धातोश्च काञ्चनेत्यादेशः । युगरूपं छर्द—पत्रमस्य **युगच्छदः** ॥७॥

ताम्राणि पुष्पाण्यस्य **ताम्रपुष्पः** । चमरोऽस्यास्ति **चमरिकः**, "अतोऽनेकस्वरात्" [ सिद्ध० ७ २.६ ] इति क. । कुं—भूमिं दालयति **कुद्दालः**, पृषोदरादित्वात् । कुण्डलमस्त्यस्य **कुण्डली**, "शिखादिभ्य इन्" [ सिद्ध० ७.२.४ ] इनीन् । कुलमस्यास्तीति **कुली** । काम्यते **काञ्चनः**, "विदन-गगन-" [ हैमोणादिसू० २७५ ] इत्यने 10 निपात्यते । मालुका—वनस्पतिविशेषस्तस्या इव पर्णान्यस्य **मालुकापर्णः** । कुं—पृथ्वीं दारयति **कुदारः** । स्वल्पा केसरा अस्य **स्वल्पकेसरः** । आह च -

कोविदारे च कुद्दाल कुदार कुण्डली कुली ।
ताम्रपुष्पश्चमरिको महायमलपत्रक ॥

[ ] इति ।

15 **यमलपत्रकः** पर्यायेणोक्त । एतस्य 'कांचणयरु' इति लोकप्रसिद्धि ॥८॥

**चम्पके काञ्चनो हेमपुष्पकः षट्पदातिथिः ।**
**कुसुमेन्द्रो वरलब्धः कुमारीवल्लभश्चलः ॥९॥**
**चाम्पेयः कुसुमारोग्यः कलिकागन्धफल्यपि ।**

चम्यते—अद्यते भृङ्गैश्चम्पकः, "कीचक-" [ हैमोणादिसू० ३३ ] इत्यके निपात्यते, 20 **चाम्पको**ऽपि, तत्र । काम्यते **काञ्चनः**, "विदन-गगन-" [ हैमोणादिसू० २७५ ] इत्यने निपात्यते, पुल्लिङ्ग । हेमवर्ण पुष्पमस्य हेमपुष्प. स्वार्थिके के **हेमपुष्पकः** । षट्पदा—भ्रमरा एव अतिथयोऽस्य **षट्पदातिथिः**, षट्पदानामतिथिरिव वा । कुसुमेषु—पुष्पेषु इन्द्र इव इन्द्र **कुसुमेन्द्रः** । वरै श्रेष्ठैर्लब्ध.- प्राप्तो **वरलब्धः** । कुमारीणां वल्लभ. **कुमारीवल्लभः** । चलति **चलः** ॥९॥

25 **चम्पादेशे** भवश्चाम्पेयः, "भवे" [ सिद्ध० ६.३.१२३ ] इत्येयण् प्रत्ययः; "चप् सान्त्वने" चप्यते इति वा, "गय हृदयादय" [ हैमोणादिसू० ३७० ] इत्यये निपात्यते । कुसुमेषु आरोग्यमस्य **कुसुमारोग्यः** । कलिकागन्धानि फलान्यस्त्य( ? नि सन्त्य )स्य **कलिकागन्धफली** । आह च —

चम्पकः सुकुमारश्च सुरभिः शीतलश्चलः ।
चाम्पेयो हेमपुष्पश्च काञ्चनः षट्पदातिथिः ॥

[ ] इति ।

एतस्य लोके 'चांपउ' इति प्रसिद्धि ।

**स्यान्नागकेसरे नागः केसरो हेमकेसरः ॥१०॥** 5
**दर्वीसहो दुष्प्ररोहश्चाम्पेयः स्कन्धभूषणः ।**
**नागपुष्पः कुम्भफलो हेम-सर्प-द्विपाह्वयः ॥११॥**

नागप्रियाणि केसरवन्ति पुष्पाण्यस्य **नागकेसरः**, तत्र । न अगो **नागः** । यद् **विश्वः**—

नागः पन्नग-मातङ्ग-क्रूर-वारिषु तोयदे । 10
नागकेसर-पुन्नाग-नागदन्तक-मुस्तके ॥

[ ] इति ।

के—जले सरति **केसरः**, सप्तम्यलुक्, केसरा सन्त्यस्य वा, अभ्रादित्वाद् प्रत्ययः, "कि ज्ञाने" चिकेति **केसर** इति वा, "मी-ज्यजि-" [हैमोणादिसू० ४३९] इति सर, बाहुलकात्र षत्वम् । हेमवर्णा केसरा अस्य **हेमकेसरः** ॥१०॥ 15

दर्वी—फणा सहति **दर्वीसहः** । दुष्ट प्ररोहोऽस्य **दुष्प्ररोहः** । **चम्पादेशे भवश्चाम्पेयः** । स्कन्धं भूषयति **स्कन्धभूषणः** । नागप्रियाणि पुष्पाण्यस्य **नागपुष्पः** । कुम्भाकाराणि फलान्यस्य **कुम्भफलः** । हेम-सर्प-द्विपेभ्यः आह्वय इति योज्यते, ततो हेम्न—स्वर्णस्य सर्पस्य द्विपस्य च आह्वयो यस्येति **हेमाह्वयः सर्पाह्वयः द्विपाह्वयः** । आह च— 20

नागपुष्पो मतो नागः केसरो नागकेसरः ।
चाम्पेयो नागकिञ्जल्कः कनकं हेम काञ्चनम् ॥

[ ] इति ।

एतस्य लोके 'नागकेसर' इति प्रसिद्धि ॥११॥

**तत्पुष्पचूर्णे तु करिकुसुमः पुष्परोचनः ।** 25

'तत्पुष्पचूर्णे' नागकेसरपुष्पचूर्णे 'तु' पुनरर्थे करिणः—हस्तिनः कुसुमः—पुष्पं **करिकुसुमः** । कुसुमशब्दः पुं-क्लीबलिङ्गः । पुष्पस्य रोचनः—दीपकः **पुष्परोचनः** ।

**कदम्बे स्यात् पीतदारुः प्रावृषेण्यो हलिप्रियः ॥१२॥**
**हारिद्रकः कादम्बर्यः पुलकी पर्वताह्वयः ।**

"कद वैक्लव्ये " सौत्र. कदने कदम्बः, "कदेर्णिद्वा"[ हैमोणादिसू० ३२२] इत्यम्बः; "अबुङ् शब्दे " कुत्सितमम्बते वा कदम्बः, तत्र । पीतवर्णो दारुरस्य
5 पीतदारुः, पुं-क्लीबलिङ्ग । प्रावृषि भव प्रावृषेण्यः, "प्रावृष एण्य " [सिद्ध० ६.३. ९२ ] इति एण्य । हलिन· प्रियो हलिप्रियः, सुगन्धिवासनात ॥१२॥

हरिद्राया अयं हारिद्र, "तस्येदम्" [सिद्ध० ६ ३ १६० ] इत्यण्. स्वार्थिके के हारिद्रकः । कादम्बर्यां–मदिरायां साधु कादम्बर्यः, "तत्र साधौ" [सिद्ध०७. १.१५] इति य·, कादम्बर्यै हितो वा "तस्मै हिते' [सिद्ध०७ १.३५] इति
10 हितेऽर्थे य. । पुलक –रोमाञ्चोऽस्त्यस्य पुलकी । पर्वतस्य आह्वयोऽस्य पर्वताह्वयः । एतस्य लोके 'कयंब' इति प्रसिद्धि[1] । अथास्य विशेषा —

**धूलीकदम्बे स्वम्बष्ठः सुवासो वृत्तपुष्पकः ॥१३॥**

धूल्या· कदम्ब. धूलीकदम्बः. तत्र । 'तु ' इति अत्र विशेषद्योतक· । "अम गतौ भजने शब्दे च" अमति अम्बष्ठः. "पष्ठैधिठादय " [हैमोणादिसू० १६६] इति स
15 निपात्यते , अम्बायां तिष्ठतीति वा. "स्था-पा स्ना-त्र क " [सिद्ध०५.१ १४२ ] इति क·, "गो-ऽम्बा-ऽऽम्ब-" [सिद्ध०२ ३ ३०] इति स्थ [?]सम्बन्धिन सकारस्य षत्वम्, "ङ्यापो बहुलं नाम्नि" [सिद्ध०२ ४ ९९] इति ह्रस्वश्च । शोभनो वास प्रतिवासोऽस्य सुवासः। वृत्तं–वर्त्तुलं पुष्पमस्य वृत्तपुष्पः, स्वार्थिके क वृत्तपुष्पकः । यदाह-

धूलीकदम्बोऽन्य सुवासो वृत्तपुष्पक ।

20 [ ] इति ॥१३॥

**धाराकदम्बे त्वरणिर्विश्वरूप-महौजसौ ।**

[ धारोपलक्षित –मेघधारोपलक्षित· कदम्ब धाराकदम्बः, तत्र ।] "ऋक् गतौ " इयर्त्ति अरणिः, "ऋ-हृ-सृ-" [ हैमोणादिसू० ६३८ ] इत्यादिना अणि प्रत्यय· । विश्वे–जगति रूपमस्य विश्वरूपः । महद् ओज बलमस्य अस्माद् वा महौजाः ।

25 **नीपे तु दीपनो धूर्तो नर्त्तो ध्रुवारकः शिवः ॥१४॥**
**महाकदम्बः प्रियको घण्टापुष्प-सुपुष्पकौ ।**

---

१ प्रसिद्धः पु२ ॥

नयति सुखं **नीपः**, "नियो वा" [ हैमोणादिसू० ३०२ ] इति कित् पः प्रत्ययः, तत्र । 'तुः' अत्र विशेषे । दीपयति **दीपनः** । "धुर्वै हिंसायां" धूर्वति विषं **धूर्तः**, "शी-री-" [ हैमोणादिसू० २०१ ] इति कित् तः । नर्तयतीव **नर्तः** । शीतलत्वाद् धुनोति शोफरोगं **धूत्रारकः**, "मवाक-श्यामाक-" [ हैमोणादिसू० ३७ ] इत्याके निपात्यते । **शिवः** उपद्रवापहारित्वात्, शेते अस्मिन् अनेन वा **शिवः**, "शीङापो ह्रस्वश्च वा" [ हैमोणादिसू० ५०६ ] इति व ॥१४॥ 5

महाश्चासौ कदम्बश्च **महाकदम्बः** । प्रीणाति **प्रियकः**, "कीचक-पेचक-" [ हैमोणादिसू० ३३ ] इत्यके निपात्यते । घण्टाकाराणि पुष्पाण्यस्य **घण्टापुष्पः** । शोभनानि पुष्पाण्यस्य सुपुष्प, स्वार्थिके के **सुपुष्पकः** । सामान्यतो विशेषतश्च सर्वाण्येतानि कदम्बनामानि । लोके तु 'कयंब' इति प्रसिद्धिः । 10

**कुटजे कोटजः कोही वत्सको गिरिमल्लिका ॥१५॥**
**वृक्षको मल्लिकापुष्पः कलिङ्गः पाण्डुरद्रुमः ।**
**इन्द्रवृक्षो यवफलो दीप्तभद्रोद्रुमल्लिका ॥१६॥**

"कुटत् कौटिल्ये" कुटति **कुटजः**, "कुटेरजः" [ हैमोणादिसू० १३० ] इत्यज, कुटादित्वाद् गुणाभाव, तत्र । बाहुलकाद् गुणे च **कोटजः** । "कुहि विस्मापने" कोहते अवश्यं **कोही**, "णिन् चावश्यका-" [ सिद्ध० ५.४.३६ ] इति णिन् । "वस्ने त्वच वत्सकः" इति **क्षीरस्वामी**, "कीचक-पेचक-" [ हैमोणादिसू० ३३ ] इत्यके निपात्यते । गिरिणा मन्ल्यते—धार्यते **गिरिमल्लिका**; गिरौ मल्लिकेव वा ॥१५॥ 15

वृक्षते—वृणोति **वृक्षकः**, 'णक-तृचौ' [ सिद्ध० ५.१.४८ ] इति णकः; वृश्च्यते—छिद्यते वृक्ष, "ऋजि-रिषि-" [हैमोणादिसू० ५६७] इति कित् सः, स्वार्थिके के **वृक्षकः** इति वा । मल्लिकाया इव पुष्पाण्यस्य **मल्लिकापुष्पः** । कलिङ्गायति **कलिङ्गः**, पृषोदरादित्वात् साधुः, "कलि शब्द-संख्यानयोः" कल्यते **कलिङ्ग** इति वा "स्फुलि कलि-पल्या द्वच इङ्गक्" [ हैमोणादिसू० १०२ ] इतीङ्गक्, **कलिङ्ग**देशजो वा [**कालिङ्गः**], अत एव **कालिङ्गं कालिङ्गी** च । **पाण्डुरो** द्रुमः **पाण्डुरद्रुमः** । इन्द्रस्य वृक्ष **इन्द्रवृक्षः**, अत एव **शक्र** इत्यस्याऽऽख्या । **यदमरः**--- 20 25

अथ कुटजः शक्रो वत्सको गिरिमल्लिका ।
[ का०२ वर्ग ४ श्लोक ६६ ] इति ।

१ प्रसिद्ध- पु२ ॥

यव इव फलमस्य **यवफलः** । दीप्तं भद्रमस्या **दीप्तभद्रा** । उडूनां मल्लिकेव **उडुमल्लिका** । आह च –

कुटजः कोटजः कोही वत्सको गिरिमल्लिका ।
कलिङ्गो मल्लिकापुष्प इन्द्रवृक्षोऽथ वृक्षकः ॥
5 [ ] इति ।

एतस्य लोके 'कुडउ' इति प्रसिद्धिः ॥१६॥

**फलं तु तस्येन्द्रयवं, बीजं भद्रयवाह्वयम् ।**

**'तस्य'** कुटजस्य फलं इन्द्रस्य यवम् **इन्द्रयवम्** । भद्रं यवं भद्रा यवा यस्य तदिति वा **भद्रयवं** बीजं कथ्यते । इन्द्रयवं कुटजफलम्, भद्रयवं तु कुटज-
10 बीजमित्यर्थः । यदाह—

फलानि तस्येन्द्रयवाः, बीजं भद्रयवास्तथा ।
[ ] इति ।

तथा —

फलानि तस्येन्द्रयवा शक्राह्वा शक्रलिङ्गिका ।
15 अथ वत्सकबीजानि प्रोक्ता भद्रयवास्तथा ॥
[ ] इति ।

एतयोर्लोके 'इन्द्रयव, कुटजबीज' इति प्रसिद्धिः ।

**शिरीषे विषहा भण्डी भण्डीरः शङ्खिनीफलः ॥१७॥**
**मृदुपुष्पः शुकपुष्पः शुकवृक्षः शुकप्रियः ।**
20 **कपीतनः कर्णपूरो भण्डिलः श्यामवल्कलः ॥१८॥**

शिरसि इष्यते **शिरीषः**, पृषोदरादित्वात् साधुः "शॄ हिंसायाम्" शीर्यते वा सौकुमार्यात् **शिरीषः**. "ऋ-जि-शॄ-पॄभ्य कित्" [ हैमोणादिसू० ५५४ ] इति किदीषः, तत्र । विषं हन्ति **विषहा**, क्विप् । "भडुङ् परिभाषणे, भण्डते **भण्डी'** इत्येके पेठुः" इति **क्षीरस्वामी** । भण्ड्यते **भण्डीरः**, "जम्बीरा-ऽऽभीर-"
25 [ हैमोणादिसू० ४२२ ] इति ईरे निपात्यते । शङ्खिन्याः फलमिव **फलमस्य** **शङ्खिनीफलः**, "उष्ट्रमुखादयः" [ सिद्ध० ३ १ २३ ] इति समासः ॥१७॥

मृदूनि पुष्पाण्यस्य **मृदुपुष्पः** । शुकस्य पुष्पं **शुकपुष्पः** । पुष्पशब्दः पुं-क्लीबलिङ्गः । यदुवाच **वाचस्पतिः**– "पुष्पोऽस्त्री" । ] इति ।

शुकस्य वृक्षः शुकवृक्षः । शुकस्य प्रियः शुकप्रियः । कपीं तनोति कपीतनः, कपिप्रियत्वात्, लिहादित्वादच्, कम्पने वा "विदन-गगन-" [हैमोणादिसू०२७५] इत्यने निपात्यते । कर्णौ पूरयति कर्णपूरः । भण्ड्यते भण्डिलः, "भण्डेर्न लुक् च वा" [हैमोणादिसू० ४८२] इति इलः प्रत्ययः । श्यामं वल्कलं—तरुत्वग् यस्येति श्यामवल्कलः । आह च — 5

गिरीषो मृदुपुष्पश्च भण्डीरः शङ्खिनीफलः ।
कपीतनः शुकतरुः श्यामवल्कः शुकप्रियः ॥

[ ] इति ।

एतस्य लोके 'सिरीस' इति प्रसिद्धिः ॥१८॥

**पाटल्यां पाटला स्थाल्यमोघा तोयाधिवासिनी । 10**
**वसन्त-कामयोर्दूती कुम्भिका कालवृन्तिका ॥१९॥**

"पट गतौ" ण्यन्तः, पाटयति [दौर्गन्ध्यं] पाटलिः, "पाटचञ्जिभ्यामलिः" [हैमोणादिसू० ७०२] इत्यलिः, पुं-स्त्रीलिङ्गः, तस्याम् । "मृदि-कन्दि-" [हैमोणादिसू० ४६५] इत्यले पाटला, ताम्रपुष्पत्वाद्वा । स्थालीव स्थाली, रसाधारत्वात्; "ष्ठल स्थाने" स्थलति वा स्थाली, "वा ज्वलादि-" [सिद्ध०५.१.६२] इति णः । काचस्थालीत्येके[2] । 15
न मोघा अमोघा[1], बहुफलत्वात् । तोये अधिवसत्यवश्यं तोयाधिवासिनी, "णिन् चाऽऽवश्यका-" [सिद्ध०५.४.३६] इति णिन् । वसन्त-कामशब्दयोर्दूतीति योज्यते, ततो वसन्तस्य कामस्य च दूतीव वसन्तदूती कामदूती । कुम्भ्याः—स्थाल्याः प्रतिकृतिः कुम्भीका, रसाधारत्वादिति, कायति कुम्भी, "का-कुसिभ्यां कुम्भः" [हैमोणादिसू० ३३७] इति किदुम्भः, गौरादित्वाद् ङी, स्वार्थिके के "ङ्यादीदूतः के" [सिद्ध० 20
२.४.१०४] इति ह्रस्वे च कुम्भिकेति भवति । कालं वृन्तमस्याः कालवृन्ता, स्वार्थिके के कालवृन्तिका अत एव कालेत्यस्या आख्या । यदाह—

अथ द्वयोः ।

पाटलिः पाटलाऽमोघा काला स्थाली फलेरुहा ॥
कृष्णवृन्ता कुबेराक्षी [अमर०का०२ वर्ग४ श्लो०५४-५५] इति । 25

१ स्थाली मोघा नि० । "मोघा स्त्री पाटलायां, मोघं त्रिषु निरर्थके ॥ इति रुद्राद् मोघाऽपि" इति अमरकोशव्याख्यासुधायां का०२ वर्ग ४ श्लो०५४ ॥ २ 'एके' इति व्याख्यासुधाकारादयः ॥

आह च-

पाटलोक्ता तु कुम्भीका ताम्रपुष्पाऽम्बुवासिनी ।
स्थाली वसन्तदूती स्यादमोघा कालवृन्तिका ॥
[ ] इति ।

एतस्या लोके 'पाडला' इति प्रसिद्धिः ॥१९॥

**अन्यस्यां तत्र तु श्वेतपाटला काष्ठपाटला ।**
**शीतला श्वेतकुम्भीका कुबेराक्षी फलेरुहा ॥२०॥**

'तु' अत्र विशेषे । श्वेता पाटला **श्वेतपाटला** । काष्ठोपलक्षिता पाटला **काष्ठपाटला** । शीतमस्त्यस्या **शीतला**, सिध्मादित्वाद् ल, शीते वा "शीङस्तलक्--" 10 [हैमोणादिसू० ५०१] इति तलक् प्रत्ययः । श्वेता चासौ कुम्भीका च **श्वेतकुम्भीका** । **कुबेराक्षी** यक्षाक्षितुल्यफलत्वात् । फले रोहति **फलेरुहा**, साङ्कुरफलत्वात् "नाम्युपान्त्य-" [सिद्ध० ५.१.५४] इति क सप्तम्यलोपश्च । यदाह-

द्वितीया पाटला श्वेता निर्दिष्टा काष्ठपाटला ।
सा चैव श्वेतकुम्भी स्यात् कुबेराक्षी फलेरुहा ॥
15 पाटली कृष्णवृन्ता । । इति ।

श्वेतपाटलानामानि ॥२०॥

**अगरावगुरुर्लोहं वंशिका विश्वरूपकम् ।**
**क्रमिजं प्रवरं राजार्हं जोङ्गकमनार्यजम् ॥२१॥**

"अग कुटिलायां गतौ" अगत्यनेन **अगरुः**, "कटि-कुटयर्ने-"[हैमोणादिसू० 20 ८१२] इत्युपलक्षणादरु प्रत्ययः अगं रुजतीति वा पृषोदरादित्वात् साधुः, पुं-क्लीबलिङ्गः, तत्र । न गुरु **अगुरुः**, पुं-क्लीबलिङ्गः । "रुहं जन्मनि" रोहति **लोहम्**, रलयोरैक्यात्लत्वम्, पुं-नपुंसकः । वंशोऽस्या अस्ति **वंशिका**, "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इति क, स्त्री-क्लीबलिङ्गः । 'वंशाम **वंशकम्**' इत्यमरटीका, "तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः" [सिद्ध० ७.१.१०८] इति कः । विश्वं रूपयति 25 **विश्वरूपकम्**, पुं-क्लीबलिङ्गः । क्रमिभिर्जन्यते **क्रमिजम्**, "क्वचित्" [सिद्ध० ५.१.१७१] इति ड । **क्रमिजग्ध**मित्यपि । प्रव्रियते **प्रवरम्**, 'युवर्ण' [सिद्ध० ५.३.२८] इत्यल्प्रत्ययः । राजोऽर्हं **राजार्हम्** । जोङ्गके गिरौ भवं **जोङ्गकम्**, "भवे" [सिद्ध० ६.३.१२३] इत्यण्प्रत्ययः । अनार्यदेशे जातम**नार्यजम्**, "क्वचित्" [सिद्ध० ५.१.१७१] इति ड । आह च-

अगरुः प्रवरं लोहं कृमिजग्धमनार्यजम् ।
कृष्णागरुः स्यादगुरुर्जौङ्गकं विश्वरूपकम् ॥
[ ] इति ।

एतस्य लोके 'अगर' इति प्रसिद्धिः ॥२१॥

**मल्लिगन्धेऽत्र मङ्गल्या** 5

मल्ल्याः--मल्लिकाकुसुमस्य गन्धो यत्र तद मल्लिगन्धम्, तत्र **मल्लिगन्धे 'अत्र'** इति अगरौ मङ्गले साधुर्**मङ्गल्या**, "तत्र साधौ" [ सिद्ध०७.१.१५ ] इति **यः**, मल्लिकापुष्पगन्धि अगुरु **मङ्गल्या**ख्यमाख्यायत इत्यर्थः । **यदमरः—**

[कालागुर्व]गुरु स्यात तु मङ्गल्या मल्लिगन्धि यत् ।
[का० २ वर्ग ६ श्लो० १२७] इति । 10

**कृष्णे तु काकतुण्डकः ।**

'तु' पुनरर्थे । कृष्णे अगरौ काकस्य तुण्ड इव **काकतुण्डः**, कृष्णत्वात, स्वार्थिके के **काकतुण्डकः** । एतस्य लोके 'कृष्णागरु' इति प्रसिद्धिः ।

**श्रीखण्डे स्यान्मलयजं चन्दनं श्वेतचन्दनम् ॥२२॥**
**गोशीर्षकं गन्धसारं भद्रश्रीस्तैलपर्णिकम् ।** 15
**फलकी सुरभिः सारं मङ्गल्ये रोहणोद्भवम् ॥२३॥**

श्रिया--सौगन्ध्यलक्षणया खण्डयत्यन्यगन्धमिति **श्रीखण्डम्**, तत्र । **मलयाद्रेर्जातं मलयजम्**, "क्वचित्" [ सिद्ध०५.१.१७१ ] इति डः, पुं-क्लीबलिङ्गः । चन्द्यते--ह्लाद्यते अनेन **चन्दनम्** "स्वमि-रसि--" [हैमोणादिसू० २६९] इत्यनः; चन्दति--आह्लादयति दीप्यते वा **चन्दनम्**, रम्यादित्वादनट्, पुं-क्लीबलिङ्गः । श्वेतं च तत् 20 चन्दनं च **श्वेतचन्दनम्** ॥२२॥

"**गोशीर्षो** गिरिराकरोऽस्त्यस्य **गोशीर्षम्**, अभ्रादित्वादः, **गोशीर्षगिरि**-भवत्वात्, स्वार्थिके के **गोशीर्षकम्**" [ ] इति **क्षीरस्वामी** । **गोशीर्षे** गिरौ भवं **गौशीर्षम्**, "भवे" [ सिद्ध०६.३.१२३ ] इत्यण्, क्लीब-लिङ्गः । यद् **गौडः**--"गौशीर्षं तैलपर्णिकम्" [ ] इति क्लीबमाह । 25 **अमरस्तु** "तैलपर्णिक-गोशीर्षौ" [ का० २ वर्ग ६ श्लो०१३१ ] इति पुंस्याह । अणप्रत्यये वृद्धिः मत्वर्थीये अप्रत्यये वृद्धेरभावः, एवं शब्दभेदो ज्ञेयः । गन्धेन

१ "तैलपर्णिक-गोशीर्षे" इति क्लीबलिङ्गद्योतकोऽपि पाठो मुद्रितेऽमरकोशे दृश्यते ॥

**सारं गन्धसारम्,** पुं क्लीबलिङ्ग । भद्रा श्रीरस्य **भद्रश्रीः । तैलपर्णिको** गिरि. आकरोऽस्यस्य **तैलपर्णिकम्,** पुं-क्लीबलिङ्ग. । फलकम्-इष्टसिद्धिरावरणं वा, तदस्यास्तीति **फलकी,** "प्रेक्षादेरिन्" [सिद्ध० ६ २ ८०] इतान । **सुरभि** गन्धाढ्यत्वात्, रभुइ् शब्दे" सुष्ठु रम्यते **सुरभिरि**ति वा, "पदि पठि-" [हैमोणादिसू० ६०७] इति बहुवचनादि, 'आगमशासनमनित्यम्" इति [ "रभोऽपरोक्षा-शवि" सिद्ध० ४ ४ १०२ इति ] नागमाभाव. । **सारं** गन्धसारत्वात्, पदैकदेशे पदसमुदायोपचारात्, यथा "सेनो भीमसेन, भामा सत्यभामा" इति **न्यायात्** । महश्च तदर्हं च **महार्हम्** । **रोहणाचले** उद्भव —उत्पत्तिर्यस्य तदिति **रोहणोद्भवम्,** अत एव **रोहणद्रुमः** । आह च

चन्दनं गन्धसारं च महार्हं श्वेतचन्दनम् ।
भद्रश्रीकं मलयजं गोशीर्षं तैलपर्णिकम् ॥

[　　　　] इति ।

एतस्य लोके 'चन्दन' इति प्रसिद्धि ॥२३॥

**अथ बर्बरके श्वेतं निर्गन्धं बर्बरोद्भवम् ।**

"बर्ब गतौ" बर्बति **बर्बरम्,** "ऋच्छि-चटि" [हैमोणादिसू० ३९७] इत्यर, **बर्बरदे**शोत्पन्नत्वाद्वा, स्वार्थिके के **बर्बरकम्** तत्र । **श्वेतं** धवलत्वात् । निर्गतो गन्धोऽस्मात् तदिति **निर्गन्धम्** । **बर्बरदेशे** उद्भव - उत्पत्तिरस्य तद **बर्बरोद्भवम्** चन्दनविशेषोऽयम् । लोके तु एतस्य 'बावरउ' इति प्रसिद्धि ।

**स्याद् रक्तचन्दने क्षुद्रचन्दनं भास्करप्रियम् ॥२४॥**
**ताम्रसारं रक्तसारं लोहितं हरिचन्दनम् ।**

रक्तं च तच्चन्दनं च **रक्तचन्दनम्,** तत्र । क्षुद्रं च तत् चन्दनं च **क्षुद्रचन्दनम्** । भास्करस्य प्रियं **भास्करप्रियम्** ॥२४॥

ताम्रेषु- अरुणेषु सार **ताम्रसारम्** । रक्तेषु सार **रक्तसारम्** । रुह जन्मनि" लत्वे रोहति **लोहितम्,** "हृ-श्या-रुहि-" [हैमोणादिसू० २१० ] इतीत, रक्तत्वाद्वा । हरे:—इन्द्रस्य चन्दनं **हरिचन्दनम्,** पुं-क्लीबलिङ्ग, हरि-कपिलं वा, तच्चातिशीतं पीतं चाहु । आह च –

रक्तचन्दनमप्यन्यल्लोहितं हरिचन्दनम् ।
रक्तसार ताम्रसार निर्दिशेत् क्षुद्रचन्दनम् ॥

[　　　　] इति ।

एतस्य लोके 'रतांजणी' इति प्रसिद्धिः ।

**कुचन्दने तु पत्राङ्गं पतङ्गं पट्टरञ्जनम् ॥ २५ ॥**
**सुरङ्गकं रक्तकाष्ठं पत्तूरं तिलपर्णिका ।**

कौ चन्दनं **कुचन्दनम्**, तत्र । पत्रेष्वङ्गति **पत्राङ्गम्** । पतति–याति रङ्गोऽस्य **पतङ्गः**, "पति तमि–" [ हैमोणादिसू० ९८ ] इत्यङ्ग । "अपभ्रंशोऽयम्" इत्येके । पट्टस्य रञ्जनं **पट्टरञ्जनम्** ॥२५॥ 5

शोभनो रङ्गोऽस्येति **सुरङ्गम्**, के **सुरङ्गकम्** । सुरक्तकमित्यपि । रक्तं च तत् काष्ठं च **रक्तकाष्ठम्** । "पत्लृ गतौ" पत्यते **पत्तूरम्**, "सिन्दूर-कर्चूर-पत्तूर-धत्तूरादयः" [ हैमोणादिसू० ४३० ] इत्यूरे निपात्यन्ते । तिलस्येव पर्णान्यस्यास्तिलपर्णी, सैव **तिलपर्णिका** । "**तिलपर्णी** नदी आकरो अस्या अस्ति" इत्यपरे ऊचिरे । 10 आह च —

कुचन्दनं पतङ्गं च रक्तकाष्ठं सुरक्तकम् ।
पत्तूरं पट्टरागं च पट्टरञ्जनमेव च ॥
[ ] इति ।

अमरोऽप्याह —

तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं च [ का० २ वर्ग ६ श्लो० १३२ ] इति ।

पत्राङ्गनामानि । लोके तु 'पतंग' इति प्रसिद्धिः । सर्वे एते चन्दनविशेषाः । यदवादि —

सर्वाण्येतानि तुल्यानि रसतो वीर्यतोऽपि च ।
गन्धेन च विशेषः स्यात् पूर्वं श्रेष्ठतमं गुणैः ॥
[ ] इति ।

**अथ द्रुमोत्पले व्याधः परिव्याधः सुगन्धिकः ॥ २६ ॥**

द्रुमजानि उत्पलानीव पुष्पाण्यस्य **द्रुमोत्पलः**, तत्र । "व्यधंच् ताडने" विध्यते अम्भसा **व्याधः**, परिविध्यते **परिव्याधः** । उभयत्र "तन्-व्यधी–" [सिद्ध० ५.१.६४] इति णः । शोभनो गन्धोऽस्यस्य **सुगन्धिकः**, "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इति कः । एतस्य लोके 'कणयर' इति प्रसिद्धिः ॥२६॥

**निर्गन्धेऽस्मिन् कर्णिकारो निषीधः पीतपुष्पकः ।**

अस्मिन् निर्गन्धे द्रुमोत्पले कर्णिकामियर्त्ति **कर्णिकारः** । निषिध्यते अम्भसेति **निषीधः**, पृषोदरादित्वात् । पीतानि पुष्पाण्यस्य **पीतपुष्पः**, स्वार्थिके के **पीतपुष्पकः** । गन्धरहितकणयरनामानि ॥

**पुन्नागे तु महानागः केसरो रक्तकेसरः ॥ २७ ॥**
**देववल्लभ-कुम्भीकौ तुङ्गः पुरुषनामकः ।**

पूजितः पुमान् **पुन्नागः**, स इव प्राधान्यात, [तत्र] । महानाग इव **महानागः**, स इव प्राधान्यात्, महांश्चासौ नागश्चेति वा । प्रशस्ताः केसराः सन्त्यस्य **केसरः**, अभ्रादित्वादः । रक्ताः केसरा अस्य **रक्तकेसरः** ॥२७॥

देवानां वल्लभो **देववल्लभः**, **कुम्भीको** रसाधारत्वात्, अनयोर्द्वन्द्वः । **तुङ्गः** उच्चैस्तरत्वात्, "तमूच् काङ्क्षायाम्" ताम्यते वा **तुङ्गः**, "कमि-तमि-शमिभ्यो डित्" [ हैमोणादिसू० १०७ ] इति डिदुङ्गः । **पुरुषनामकः** पुरुषाख्यत्वात् । यदवादीन्दुना—

तुङ्गः पुष्पकसञ्ज्ञः स्यात् पुन्नागो रक्तकेसरः ।
पुन्नागः पुरुषाह्वश्च केषाञ्चित् पद्मकेसरः ॥
[ ] इति ।

**अमरेणापि—**

पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ [का० २ वर्ग ४ श्लो० २५] इति । एतस्य लोके 'पुन्नाग' इति प्रसिद्धिः ।

**अगस्त्ये तु बहुसेनः शुकनाशो मुनिद्रुमः ॥ २८ ॥**

अगं स्तभ्नाति **अगस्त्यः**, "अग-पुलाभ्यां स्तम्भेर्डित्" [हैमोणादिसू० ३६३] इति डिद यः, [तत्र] । बह्वयः सेना अस्य **बहुसेनः** । शुकं नाशयति **शुकनाशः**, शुकस्य नाशोऽस्मादिति वा । मुनीनां द्रुमो **मुनिद्रुमः** । आह च —

अगस्त्याह्वो बङ्ग('बहु)सेनो मधु शिग्रुर्मुनिद्रुमः ।
[ ] इति ।

एतस्य लोके 'अगथियउ' इति प्रसिद्धिः ॥ २८ ॥

**करवीरे कणवीरः श्वेतपुष्पोऽश्वमारकः ।**
**प्रतिहासः शतप्रासोऽश्वरोहः कुमुदोद्भवः ॥ २९ ॥**

१ अथागस्त्ये बङ्गसेनः नि० ॥ २ °रोध. कु नि० ॥

किरति—क्षिपति **करवीरः**, "जम्बीरा-ऽऽमीर-" [हैमोणादिसू० ४२२] इतीरे निपात्यते, कृणोति—हिनस्ति **करः**, स वीर इव मारकत्वाद्वा **करवीरः**; कराः—कर्तारो वीरा अत्रेति वा, तत्र। कणा वीरा इव अस्य **कणवीरः**; "कण् आर्तस्वरे" इति **बोपदेवधातुपाठोक्तेः** कणन्ति कणाः, कणा वीरा अस्मादिति वा। श्वेतानि पुष्पाण्यस्य **श्वेतपुष्पः**। अश्वान् उपभुक्तो मारयति **अश्वमारकः**। प्रतीपः—अश्वघ्नत्वाद् हासः—विकासोऽस्य **प्रतिहासः**। शतं—बहूनि प्रासाः—कुन्ता इव पुष्पाण्यस्य **शतप्रासः**। अश्वं रोहति **अश्वरोहः**। कुमुदमिव उद्भवोऽस्य **कुमुदोद्भवः**। आह च— 5

शतकुन्तः श्वेतपुष्पः प्रतिहासोऽश्वरोहकः।

[ ] इति।

**अश्वहा अश्वघ्नः श्वेतकुन्दश्च** श्वेतकणवीरनामानि ॥ २९ ॥ 10

**रक्तपुष्पेऽत्र लगुडश्चण्डातश्चण्ड-गुल्मकौ।**

'अत्र' इति रक्तपुष्पे कणवीरे "लगे सङ्गे" लगति **लगुडः**, "लगेरुड" [हैमोणादिसू० १७७] इत्युडः प्रत्ययः। चण्डमतति तीक्ष्णत्वात् **चण्डातः**। **चण्डातकोऽपि**। चण्ड इव **चण्डः** तैक्ष्ण्यात्। गुल्मं किरति—क्षिपति **गुल्मकः**, "क्वचित्" [सिद्ध० ५.१.१७१] इति डः। यदाह— 15

द्वितीयो रक्तपुष्पस्तु चण्डातो लगुडस्तथा।
चण्डातको गुल्मकश्च प्रचण्डः करवीरक ॥
गुल्महरोऽपि [ ] इति।

रक्तकणवीरनामानि।

**तमाले तु कालस्कन्धस्तापिच्छो रञ्जनो वसुः ॥ ३० ॥** 20

"तमूच् काङ्क्षायाम्" ताम्यति **तमालः**, "ऋ-कृ-मृ-" [हैमोणादिसू० ४७५] इत्यालः, पुं-क्लीबलिङ्गः, तत्र। कालः स्कन्धोऽस्य **कालस्कन्धः**। तापिनश्छादयति **तापिच्छः**, "क्वचित्" [सिद्ध० ५.१.१७१] इति ड। पृषोदरादित्वाच्चानुस्वारागमे **तापिञ्छोऽपि**। रञ्जयति **रञ्जनः**। वसति श्यामवर्णोऽत्र **वसुः**, "भृ-मृ-तृ-त्सरि-" [हैमोणादिसू० ७१६] इत्यु। एतस्य लोके 'तमाल' इति प्रसिद्धिः ॥ ३० ॥ 25

**तमालपत्रे वस्त्राख्यं रोमसं तामसं दलम्।**

१ कालस्कन्धस्तमाले स्यात् तापि° नि०॥ २. वस्त्राख्यं नि०॥

तमालस्य पत्रं **तमालपत्रम्**, तत्र । **वस्वाख्यं** वसुनामत्वात् । रोमाणि स्यति **रोमसम्** । तमोऽस्त्यस्य **तामसम्**, श्यामत्वात्, ज्योत्स्नादित्वादण । **दलम्** पत्राख्यत्वात् । यदाह—

तमालपत्रं पत्रं स्यात् पलाशं च दलं छदम् ।

5 [ ] इति ।

तमालपत्रनामानि ॥

**सूक्ष्मैलायां चन्द्रबाला द्राविणी निष्कुटिस्तुटिः ॥ ३१ ॥**
**कपोतवर्णिका तुच्छा कोरङ्गी बहुला तुला ।**

एलयति मुखदौर्गन्ध्यं प्रेरयति **एला**, सूक्ष्मा चासौ एला च **सूक्ष्मैला**, 10 तस्याम् । चन्द्रस्य–कर्पूरस्य बाला–पुत्रीव चमत्कारादिति **चन्द्रबाला** । द्रावयति–मुखदौर्गन्ध्यमवश्यमिति **द्राविणी**, आवश्यके णिन्निति णिन् । निष्क्रान्ता कुटे -कोशाद् **निष्कुटिः** । "तुटत् कलहे" तुटति **तुटिः**, "नाम्युपान्त्य -" [सिद्ध०५.१.५४] इति किदि, स्त्रीलिङ्ग । "त्रुटत् छेदने" रोपान्त्योऽयम्, "नाम्युपान्त्य–" [सिद्ध०५.१.५४] इति किदिप्रत्यये **त्रुटिरि**त्यपि ॥ ३१ ॥

15 कपोतस्येव वर्णोऽस्या **कपोतवर्णा**, स्वार्थिके के **कपोतवर्णिका** । **तुच्छा** लघीयसीत्वात् । कुरति–शब्दायते **कोरङ्गी**, "शृङ्ग-शार्ङ्गादय" [हैमोणादिसू० ९६] इति गे निपात्यते, गौरादित्वाद् ङी । बंहते **बहुला**, "स्था-बङ्कि-बंहि-" [हैमोणादिसू० ४८६] इति उलो न लोपश्च, बहूनि पणानि लाति वा । तोल्यते **तुला**, भिदादित्वात् साधुः । आह च —

20 सूक्ष्मैला द्राविडी तुच्छा कोरङ्गी बहुला त्रुटिः ।
एला कपोतवर्णा च चन्द्रबाला च निष्कुटिः ॥
[ ] इति ।

सूक्ष्मैलानामानि । लोके 'एलची' इति प्रसिद्धिः ।

**स्थूलैलायां बृहदेला पत्रैला त्वक्सुगन्धिका ॥ ३२ ॥**
25 **त्रिदिवोद्भवा पृथ्वीका कर्णिका त्रिपुटा पुटा ।**

१. द्राविडी नि०॥ २ भद्रैला नि० ॥

स्थूला चासौ एला च **स्थूलैला** तस्याम् । बृहती चासौ एला च **बृहदेला** । पत्रोपलक्षिता एला **पत्रैला** । त्वचा सुगन्धिका **त्वक्सुगन्धिका** ॥ ३२ ॥

त्रिदिवे–स्वर्गे उद्भव–उत्पत्तिर्यस्या सा **त्रिदिवोद्भवा** । पृथ्वी प्रतिकृति **पृथ्वीका** बहुपर्णत्वात्, "तस्य तुल्ये क संज्ञा-प्रतिकृत्योः" [सिद्ध०७.१.१०८] इति कः । कर्णयति **कर्णिका,** णके आप् । त्रीणि पुटान्यस्याः **त्रिपुटा** त्र्यस्रि । पुटानि सन्ति अस्याः **पुटा,** अभ्रादित्वादः । आह च —

भद्रैला बृहदेला च त्रिदिवा त्रिपुटोद्भवा ।
स्थूलैला त्वक्सुगन्धा च पृथ्वीका धान्यका पुटा ॥

[ ] इति ।

बृहदेलानामानि । लोके तु 'कङ्कोली एला' इति प्रसिद्धिः । 10

**कर्पूरे स्याद् घनसारो हिमाह्वो हिमवालुका ॥ ३३ ॥**
**सिताभ्रः शीतलरजः स्फटिकश्चन्द्रनामकः ।**

कल्पते **कर्पूरः,** पुं-क्लीबलिङ्ग. "मी-मसि-" [ हैमोणादि सू०४२७] इत्युरः, [तत्र] । घनस्येव सारोऽस्य **घनसारः** । हिमस्याऽऽह्वाऽस्य **हिमाह्वः,** शीतलत्वात् । हिमा–शीता चासौ वालुका च **हिमवालुका** ॥ ३३ ॥ 15

सिताभ्रसदृशत्वात् **सिताभ्रः,** दन्त्यादि । शीतलं रजोऽस्य **शीतलरजः** । स्फटिक इव **स्फटिकः,** निर्मलत्वात् । चन्द्रस्य नाम अस्य **चन्द्रनामा,** स्वार्थिके के **चन्द्रनामकः,** आह्लादकत्वात् । [चन्द्रपर्याया अपि] । आह च –

कर्पूरं शीतलरजः सिताभ्रं स्फटिको हिमः ।
चन्द्रस्तुषारस्तुहिनः शशीन्दु-हिमवालुका ॥ 20

[ ] इति ।

कर्पूरनामानि । लोके 'कपूर' इति प्रसिद्धिः ।

**कक्कोलके कटुफलं कोलकं माधवोषितम् ॥ ३४ ॥**
**कोलं कोशफलं कोरं मारीचं द्वीपमित्यपि ।**

कचते–दीप्यते **कक्कोलम्,** "पिञ्छोल-कल्लोल-" [हैमोणादि सू०४९५] इत्योले 25 निपात्यते; "ककि लौल्ये, ककतेऽत्र क कोलति-संस्त्यायति वा" इति **क्षीरस्वामी;**

१ कर्पूरे घनसार स्याद् हिमा° नि० ॥ २ कोमक मागधोत्थितम् नि० ॥

स्वार्थिके के कक्कोलकम्, तत्र । कटु-क्षारं फलमस्य कटुफलम् । कोलति-संस्त्या-
यति कोलम्, स्वार्थिके के कोलकम् । माधवे उप्यते स्म माधवोपितम् ॥३४॥

कोलति कोलम्, अच् । कोशे फलान्यस्य कोशफलम् । कोलशब्दस्य
र-लयोरैक्ये कोरम् । "मृंत् प्राणत्यागे" म्रियते अनेन मारीचम्, "म्रियतेरीचण"
5 [ हैमोणादिसू० ११८ ] इतीचण्, पुं-क्लीबलिङ्ग । द्वीपमिव द्वीपम् । आह च--

कक्कोलकं कृतफलं कोलकं कटुकाफलम् ।
तैलं कटुफलं द्वीपं मारीचं माधवोपितम् ॥

[ ] इति ।

एतस्य लोके 'कङ्कोल' इति प्रसिद्धिः ।

10 **लवङ्गं शिखरं दिव्यं भृङ्गारं वारिजं लवम् ॥ ३५ ॥**
**श्रीपुष्पं श्र्याह्वयं देवपुष्पं चन्दनपुष्पकम् ।**

"लूग्श् छेदने" लूयते लवङ्गम्, "पति-नमि-" [ हैमोणादिसू० ९८ ] इत्यङ्ग, तत्र ।
"शाखृ व्याप्तौ" शाखति शिखरम्, "शाखेरिदेतौ चात" [ हैमोणादि सू० ४०० ] इत्यर,
धातोराकारस्य चेकारः, शिखरकारत्वात् । दिवि भव दिव्यम्, "द्युप्रागपागुद-
15 क्प्रतीचो य" [ सिद्ध० ६ ३.८ ] इति य । भ्रियते भृङ्गारम्, "द्वार-शृङ्गार-" [ हैमोणादि-
सू० ४११ ] इत्यारे निपात्यते । वारिणि जले जात वारिजम्, "क्वचित्" [ सिद्ध० ५ १
१७१ ] इति ड । लूयते लवम् ॥ ३५ ॥

श्रिया पुष्पं श्रीपुष्पम् । श्रिया आह्वयो यस्य तत श्र्याह्वयम् । देवं-द्युति-
मद देवाना वा पुष्पं देवपुष्पम् । चन्दनस्य पुष्पम चन्दनपुष्पम्, स्वार्थिके के
20 चन्दनपुष्पकम् । आह च--

लवङ्गं देवकुसुमं भृङ्गारं शिखरं लवम् ।
दिव्यं चन्दनपुष्पं च श्रीपुष्पं वारिसम्भवम् ॥

[ ] इति ।

एतस्य लोके 'लवङ्ग' इति प्रसिद्धिः ।

25 **नलिकायां कपोताङ्घ्रिर्निर्मध्या शुषिरा नटी ॥ ३६ ॥**
**अञ्जनकेशी धमनी शून्या विद्रुमवल्ल्यपि ।**

१ धमन्यञ्जनकेशी च शू॰ नि० ॥

"णल गन्धे" नलति **नली**, स्वार्थिके के **नलिका**, तस्याम् । कपोतांह्रिरिव **कपोतांह्रिः**, नलिकत्वात् । निर्गतं मध्यमस्या **निर्मध्या** । शुषिः—छिद्रमस्या अस्ति **शुषिरा**, "मध्वादिभ्यो रः" [सिद्ध० ७.२.२६] इति रः । नटति–नृत्यति वायुना **नटी**, नर्तकीत्वात्, अच्, गौरादित्वाद् ङी ॥ ३६ ॥

अञ्जनाभाः केशा अस्याः **अञ्जनकेशी** । धमनीव **धमनी**, शौषिर्यात् । 5 शुने हिता **शून्या**, "शुनो वश्चोदूत्" [ सिद्ध० ७.१.३३ ] इति **यः**। विद्रुमवल्लीव **विद्रुमवल्ली** नलीयम् । आह च—

नलिका विद्रुमलता कपोतचरणा नली ।
शुषिरा धमनी शून्या निर्मध्या नर्तकी नटी ॥

[ ] इति । 10

नलिकानामानि ।

**अतिमुक्ते मण्डकः स्यात् पुण्ड्रको भ्रमरोत्सवः ॥ ३७ ॥**
**पराश्रयः सुवसन्तः कामुको माधवी लता ।**

अतिक्रान्तो मुक्तान् विरक्तान **अतिमुक्तः**, तत्र । मण्डयति **मण्डकः**, णक । **पुण्ड्र**देशोद्भवत्वात् **पुण्ड्रः**, स्वार्थिके के **पुण्ड्रकः** । भ्रमराणामुत्सवोऽस्मादिति 15 **भ्रमरोत्सवः** ॥३७॥

परः—श्रेष्ठ आश्रयोऽस्य **पराश्रयः**, परैराश्रीयते वा । शोभनो वसन्तोऽस्मादिति **सुवसन्तः** । कमनशील **कामुकः**, "शृकम–" [ सिद्ध० ५.२.४० ] इत्युकण् । मधौ–वसन्ते भवा **माधवी**, "भर्तु-सन्ध्यादेरण्" [ सिद्ध० ६.३.८९ ] इत्यण् । लाति लता, "पृषिरञ्जि-" [ हैमोणादिसू० २०८ ] इति किदतः । 20 आह च—

अतिमुक्तः पुण्ड्रकः स्याद् वासन्ती माधवी लता ।
[ अमर० का०२ वर्ग४ श्लो०७२ ] इति ।

अन्योऽप्याह—

अतिमुक्तो माधवी च सुवसन्तः पराश्रयः । 25
अतिमुक्तः कामुकश्च मण्डको भ्रमरोत्सवः ॥

[ ] इति ।

---

१ सुवासन्ती का° नि० ॥

अतिमुक्तनामानि । लोके 'अमीतउ' इति प्रसिद्ध ।

**पिप्पले बोधिरश्वत्थः श्रीवृक्षश्चलपत्रकः ॥ ३८ ॥**
**मङ्गल्यः केशवावासः श्यामलो द्विरदाशनः ।**

"पल गतौ" पलति **पिप्पलः**, "पृ-पलिभ्यां टित् पिप् च पूर्वस्य" [ हैमोणादिसू० ११ ] इति अः प्रत्ययः पिप् च पूर्वस्य, पिप्पलानि—**देश्यां** पत्राणि, तानि सन्त्यस्य वा, अभ्रादित्वाद् । "अपि प्लवते" इति **नैरुक्ताः** । "एवमाद्याः प्राकृता अपि" इति **धन्वन्तरिः** । यदाह—

प्रायो जनाः सन्ति वनेचराद्या गोपादयः प्राकृतनामतज्ज्ञाः ।
प्रयोजनार्थो वचनप्रवृत्तिर्यतस्ततः प्राकृत इत्यदोषः ॥

10　　[　　] इति ।

किञ्च—

रस-वीर्य-विपाकेभ्यो मूलात् पुष्पात् फलाद् दलात् ।
आकाराद् देश-कालादेर्वनौषध्यर्थमुन्नयेत् ॥

[　　] इति ।

15 तत्र । बुध्यते **बोधिः**, "किलि-पिलि-" [ हैमोणादि सू० ६०८ ] इति इः, बोधिसत्त्वाख्य सर्वोपकारित्वात् तनुवृत्तत्वाद् गुरुपर्णत्वाच्च । अश्वेषु तिष्ठति **अश्वत्थः** अश्वाश्रयः, पृषोदरादित्वात् सस्य तत्वम् । श्रिया युक्तो वृक्षः **श्रीवृक्षः** । स्वल्पवातेऽपि चलानि पत्राण्यस्य **चलपत्रः**, स्वार्थिके के **चलपत्रकः** ॥३८॥

मङ्गले साधुर्मङ्गल्यः, "तत्र साधौ" [ सिद्ध० ७.१.१५ ] इति यः ।
20 केशवस्य आवासः केशवः आवसत्यत्रेति वा **केशवावासः** । अत एव **कृष्णावासः** । श्यामो वर्णोऽस्त्यस्य **श्यामलः**, सिध्मादित्वाद् लः । द्विरदस्य अशनः— भक्तं **द्विरदाशनः**, पुं-क्लीबलिङ्गः । आह च—

पिप्पलः केशवावासश्चलपत्रः पवित्रकः ।
मङ्गल्यः श्यामलोऽश्वत्थो बोधिवृक्षो गजाशनः ॥

25　　[　　] इति ।

एतस्य लोके 'पीपल' इति प्रसिद्धिः ।

**गर्दभाण्डे कन्दरालश्छायावृक्षः कमण्डलुः ॥३९॥**
**प्लक्षो वटः प्लवः शुङ्गी सुपार्श्वश्चारुदर्शनः ।**
**कपीतनः कपीतः स्यात् पीतन-प्लवकावपि ॥४०॥**

गर्दभ इवाण्डमस्य **गर्दभाण्डः**: गर्द—सशब्दं भाण्डमस्येति वा, तत्र । कन्दरां लाति **कन्दरालः**, गोणादित्वात् कन्दराशब्दस्याबन्तत्वम् । छायायुक्तश्छायाया वा वृक्षः **छायावृक्षः** । क—पानीयमनिति—प्राणित्यस्मिन्निति **कमण्डलुः**, "गूहलु-गुग्गुलु-कमण्डलव " [ हैमोणादिसू० ८२४ ] इति आलुप्रत्यये निपात्यते, निपातनाच्च कम्पूर्वादनितेर्डाऽन्तो ह्रस्वश्च प्रत्ययादे, पुंलिङ्ग ॥३९॥ 5

प्लक्षति--अधो गच्छति **प्लक्षः** "प्लुष् दाहे" प्लोषत्यशिवमिति वा, "प्लुषे प्लक्ष् च" [ हैमोणादिसू० ५६६ ] इति स प्रत्ययो धातोश्च प्लक्ष् इत्यादेश । वटति—वेष्टयति मूलैर्**वटः**, अच् , त्रिलिङ्ग । ' प्लुङ् गतौ ' प्लवते अशिवमस्मादिति **प्लवः** । शाम्यति **शुङ्गी**, " कमि-नमि- " [ हैमोणादिसू० १०७ ] इति डिदुङ्ग , गौरादित्वाद् ङीः । शोभन पार्श्वमस्य **सुपार्श्वः** । चारु—मनोहर दर्शनमस्य **चारुदर्शनः** । कं पीतयति **कपीतनः**, " इणक गतौ " कपीन् एति वा, पृषोदरादित्वात् । कं पीतयति **कपीतः**, अच् । कपीतनशब्दसम्बन्धिककारस्य पृषोदरादित्वाल्लोपे **पीतनः**, पीतयति वा **पीतनः** । प्लवते वातेन **प्लवकः** । आह च — 10 15

प्लक्ष कपीतन शुङ्गी सुपार्श्वश्चारुदर्शनः ।
प्लवको गर्दभाण्डश्च कमण्डलुर्वट प्लव ॥
[ ] इति ।

**अमरो**ऽपि— 20

गर्दभाण्डे कन्दराल-कपीतन-सुपार्श्वकाः ।
[ का०२ वर्ग ४ श्लो०४३ ] इति ।

गर्दभाण्डनामानि । लोके तु ' पींपरी ' इति प्रसिद्धिः ॥४०॥

**पर्कट्यां पर्कटी प्लक्षः सतीदो लक्षणो जटी ।**[1]

" पृचैप् सम्पर्के " पृच्यते **पर्कटी**, " कपट-कीकटादयः " [ हैमोणादिसू० १४४ ] इत्यटे निपात्यते, गौरादित्वाद् ङी । यत **शाश्वतः**— 25

१ कर्पटी पर्कटी प्लक्ष सतीदो लक्षणे नटी नि०॥

विज्ञेया पर्कटी प्लक्षः प्लक्षः पिप्पलपादपः ।

[ ] इति ।

तस्याम् । पर्कटाख्यं फलमस्त्यस्य **पर्कटी**. इन्नन्तोऽयम् । यद् **वाचस्पतिः**—

"फलं त्वेतस्य पर्कटम्" [ ] इति ।

5 **प्लक्ष**शब्दस्य साधना अत्र पूर्ववत् । सतां दयते पालयति **सतीदः** । लक्षयति **लक्षणः** । जटा सन्त्यस्य **जटी**, शिखादित्वादिन् ।

**वटे वैश्रवणावासो न्यग्रोधो बहुपाद् ध्रुवः ॥ ४१ ॥**
**स्कन्धजन्मा रक्तफलः क्षीरी शुङ्गी वनस्पतिः ।**

वटति—वेष्टयति मूलैर्**वटः**, तत्र । वैश्रवणस्य—धनदस्य आवासो **वैश्रवणावासः** ।
10 न्यग् रोहति **न्यग्रोधः**, "वीरुन्न्यग्रोधौ" [सिद्ध० ४.१.१२१] इति धत्वे साधुः, न्यक्—तिर्यग्मार्गे मूलैः रुणद्धि वा । बहवः पादाः- मूलान्यस्य **बहुपाद्**, "सुसङ्ख्यात्" [सिद्ध० ७.३.१५०] इति पाद्भावः । "ध्रुत् गति-स्थैर्ययोः" ध्रुवति **ध्रुवः**, "तुदादिविषि-" [हैमोणादिसू० ५] इति किदः प्रत्ययः ॥ ४१ ॥

स्कन्धात्—प्रकाण्डाद् जन्माऽस्य **स्कन्धजन्मा** । रक्तानि फलान्यस्य **रक्तफलः** ।
15 क्षीरमस्त्यस्य **क्षीरी** । **शुङ्गी**शब्दस्य साधना प्राग्वत् । वनस्य पतिः **वनस्पतिः**, वर्चस्कादित्वात् साधुः । आह च- -

वटो रक्तफलः शुङ्गी न्यग्रोधः स्कन्धजो ध्रुवः ।
क्षीरी वैश्रवणावासो बहुपादो वनस्पतिः ॥

[ ] इति ।

20 न्यग्रोधनामानि । लोकेऽस्य 'वड' इति प्रसिद्धिः ।

**उदुम्बरे जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ॥ ४२ ॥**
**सदाफलो वसुवृक्षः श्वेतवल्को मशकस्यपि ।**

"उन्दी (उन्दैप्) क्लेदने" उनत्ति **उदुम्बरः**, 'तीवर-धीवर-' [हैमोणादिसू० ४४४] इति वरटि निपात्यते, निपातनाद् उन्देर्धातोः किदुम् चान्तः, उल्लङ्घितोऽ
25 म्बर इति वा, पृषोदरादित्वाद् उत्वम्, तत्र । मशकगर्भाणि फलान्यस्य **जन्तुफलः** । अत एव **कृमिफल** इति पर्यायेणोक्तः । यज्ञस्याङ्गोऽस्य **यज्ञाङ्गः** । हेमवर्णं दुग्धमस्य **हेमदुग्धः**, के **हेमदुग्धकः** ॥ ४२ ॥

सदा फलति **सदाफलः** । वसोर्वृक्षो **वसुवृक्षः** । श्वेतो वल्कः—छल्लिरस्य **श्वेतवल्कः** । मशकाः सन्त्यस्य **मशकी** । आह च—

क्षीरवृक्षे हेमदुग्ध उदुम्बर-सदाफलौ ।
अपुष्प-फलसम्बद्धो यज्ञाङ्ग श्वेतवल्कलः ॥

[ ] इति । 5

इन्दुरपि जगाद—

उदुम्बरस्तु यज्ञाङ्ग सुचक्षु श्वेतवल्कल ।
हेमदुग्ध कृमिफल क्षीरवृक्ष सकाञ्चन. ॥

[ ] इति ।

उदुम्बरनामानि । लोके 'उंबरा' इति प्रसिद्धिः । 10

**काकोदुम्बरिकायां तु फाल्गुनी फल्गुवाटिका ॥ ४३ ॥**
**फल्गुराजी फलभारी मलयूर्जघनेफला ।**

काकप्रिया उदुम्बरिका **काकोदुम्बरिका,** तस्याम् । फल्गुनस्येयं **फाल्गुनी,** "तस्येदम्" [सिद्ध० ६.३.१६०] इत्यण् । फल्गुश्चासौ वाटिका च **फल्गुवाटिका** ॥४३॥

फलति **फल्गुः,**" फलि-वल्यमेर्गुः " [ हैमोणादिसू० ७५८ ] इति गुः । अजति 15 **आजिः,**"पादाचात्यजिभ्याम्" [ हैमोणादिसू० ६२० ] इति णिदिः, "पद: पादस्याऽज्याति-गोपहते" [सिद्ध० ३.२.९५] इति निर्देशाद् ङीभावाभावः, ङ्याम् **आजी** । फलानि बिभर्ति **फलभारी,** "कर्मणोऽण्" [सिद्ध० ५ ३.१४] इत्यण्, गौरादित्वाद् ङीः । "युणि जुगुप्सायाम्" मलं श्वित्रं यावयते **मलयूः,** पृषोदरादित्वात् । जघने—बुध्ने फलान्यस्याः **जघनेफला,** सप्तम्यलुक् । एते स्त्रीलिङ्गा । आह च— 20

काकोदुम्बरिका फल्गुराजी [च] फल्गुवाटिका ।
फाल्गुनी फलभारी च मलयूः श्वित्रभेषजम् ॥

[ ] इति ।

काकोदुम्बरिकानामानि । लोके 'कालुम्बरी' इति प्रसिद्धिः ।

**राजादने तु राजन्या क्षीरिका प्रियदर्शनः ॥४४॥** 25
**कपिप्रियो दृढस्कन्धो मधु-शैलफलो नृपः ।**

१ फलाराजी फलभारी फल्गु० नि० ॥ २ ०राजफलो नि० ॥

राज्ञाम् अदनं मृष्टत्वाद् **राजादनम्**, पु-क्लीबलिङ्ग, तत्र । राज्ञे हिता **राजन्या,** "तस्मै हिते" [सिद्ध० ७.१ ३५] इति हितेऽर्थ य । क्षीरमस्त्यस्या **क्षीरिका,** क्षीरस्वादुत्वात, "अतोऽनेकस्वरात्" [सिद्ध० ७.२.६] इतीक । प्रियं दर्शन-मस्य **प्रियदर्शनः** ॥४४॥

5 कपे प्रिय **कपिप्रियः** । दृढ स्कन्ध प्रकाण्डोऽस्य **दृढस्कन्धः** । ['मधु-रालफल'] मधुरालाभ्या फलमिति योज्यते, तत मधु–मृष्ट फलमस्य **मधुफलः,** रालवर्णं फलमस्य **रालफलः** । नृपप्रियत्वाद् **नृपः** । आह च

क्षीरिकोक्ता च राजन्या क्षीरभृद् रूपको नृप ।
राजादनो दृढस्कन्ध कपीष्ट प्रियदर्शन ॥

10 [ ] इति ।

राजादननामानि । लोके तु 'रायणी' इति प्रसिद्धि ।

**पियाले तु राजवृक्षो बहुवल्को धनुष्पटः ॥ ४५ ॥**
**सन्नकद्रुः खरस्कन्धश्चारस्तापसवल्लभः ।**

"पां पाने" पीयते **पियालः,** 'कुलि-पिलि-बिशि-बिडि-मृणि-कुणि-पी-प्रीभ्य कित' 15 [हैमोणादिसू० ४७६] इत्याल प्रत्यय, तत्र । राज्ञा वृक्षो **राजवृक्षः** । बहवो वल्का अस्य **बहुवल्कः** । धनुष इव पट -विस्तारोऽस्य **धनुष्पटः** ॥४५ ॥

सन्नकः–खरो द्रु–स्कन्धोऽस्य **सन्नकद्रुः** । खर–कठोर स्कन्धोऽस्य **खर-स्कन्धः** । "चर भक्षण च" चर्यते–अद्यते **चरः** चर एव **चारः,** प्रज्ञादित्वादण् । तापसाना वल्लभ **तापसवल्लभः** । आह च

20 पियालोऽथ खरस्कन्धश्चारो बहुलवल्कल ।
सन्नकद्रुश्चापपटो ललनस्तापसप्रिय ॥

[ ] इति ।

**चापपट** इति पर्यायेणोक्त । पियालनामानि । लोके 'चारु' इति प्रसिद्धि ।

**आम्रातके वर्षपाकी कपिचूतः कपिप्रियः ॥ ४६ ॥**
25 **कपीतनः पीतनकस्तनुक्षीरोऽम्लवाटकः ।**
**शृङ्गी कपिरसाढ्यश्च दृष्यफलो बिभीषणः ॥ ४७ ॥**

"अम शब्द-भक्त्यो" अमति **आम्रातकः** "श्लेष्मातका-ऽऽम्रातक-" [हैमोणादि-सू० ८३] इति निपात्यते आम्रमतति कपिचूतत्वादिति वा, तत्र । वर्षेण पाकोऽस्त्यस्य **वर्षपाकी** । कपे चूत आम्र **कपिचूतः** । कपे प्रिय **कपिप्रियः** ॥ ४६ ॥

| | |
|---|---|
| हरिद्रा पीतिका **पिण्डा** रजनी **रञ्जनी** निशा ।<br>गौरी वर्णवती पीता हरिता वरवर्णिनी ॥ | हरिद्रा पीतिका **पिङ्गा** रजनी रञ्जिनी निशा ।<br>गौरी वर्णवती पीता [1]हरिता वरवर्णिनी ॥ |
| . ... ... .... | . .. .. |
| अन्या दारुहरिद्राऽ**पि हरिद्रुः** पीतचन्दनम् ॥<br>निर्दिष्टा **वै कण्टकिनी स** च कालेयकः स्मृतः ।<br>**कालीयको** दारुनिशा **दार्वी-पीतद्रु -पीतिकाः** ॥<br>कटङ्कटेरी पर्जन्या पीतदारुः पचम्पचा ।<br>पत्र. ९२ | अन्या दारुहरिद्रा [2]**च पीतद्रुः** पीतचन्दनम् ॥<br>निर्दिष्टा **काष्ठरजनी सा** च कालेयकं[3] स्मृतम् ।<br>**कालायकं** दारुनिशा **दर्वी पीताह्वपी**[4]**तकम्**<br>कटङ्कटेरी पर्जन्या पीतदारु पचम्पचा ।<br>हेमवर्णवनी पीता हेमकान्ता [5]कुसुम्भका ।<br>वर्ग १ श्लो० ५४, ५७-५९ पत्र १७ १८ |
| स्थौणेयक **बर्हिचूड** **शुकपुच्छं** शुकच्छदम् ।<br>वि**कीर्णं** शुकबर्हं च हरित शीर्णरोमकम् ॥<br>पत्र ९३ | स्थौणेयक **बर्हिचूड** शुक**पुच्छं** शुकच्छदम् ।<br>वि**कर्णं** शुकबर्हं च हरित शीर्णरोमकम् ॥<br>वर्ग ३ श्लो० ६९ पत्र ११० |
| स्पृक्का **स्पृग्** ब्राह्मणी देवी **लता लङ्को-यिका मरुत्** ।<br>प**ङ्क**मुष्टिर्देवपुत्रो निर्माल्या पिशुना वधू ॥<br>पत्र. ९४ | स्पृक्काऽ**सृग्** ब्राह्मणी देवी **मालाली कोटिका मता** ।<br>प**ञ्च**मुष्टिर्देवपुत्री निर्माल्या पिशुना वधू ॥<br>वर्ग ३ श्लो० ६२ पत्र १०८ |
| विड**ङ्गा** जन्तुहन्त्री च कृमिघ्नी चित्रतण्डुला ।<br>तण्डु**लः** कृमिहाऽमोघा **के**रला मृगगामिनी ॥<br>पत्र ९५ | विड**ङ्गं** जन्तुहन्त्री च कृमिघ्नी चित्रतण्डुला ।<br>तण्डु**ली** कृमिहाऽमोघा **कै**रला मृगगामिनी ॥<br>वर्ग २ श्लो० ११ पत्र. ७१ |
| ऋषभो **धूर्वहो** धीरो मातृको वृषभो वृष ।<br>विषाणी ककु**द्मी**न्द्राक्षो बन्धुरो गोप**तिः स्मृतः** ॥<br>पत्र. ९६ | ऋषभो **दुर्धरो** [6]धीरो मातृको वृषभो वृष ।<br>[7]विषाणी **ककुद्मि**न्द्राक्षो बन्धुरो गोप**तिस्तथा** ।<br>वर्ग १ श्लो० १२५ पत्र. ३० |
| ऋद्धिर्वृद्धि सुख सिद्धी रथाङ्ग मङ्गलं वसु ।<br>ऋषिसृष्टा युग योग्यं लक्ष्मी सर्वजनप्रिया ॥<br>पत्र. ९६ | ऋद्धिर्वृद्धि सुख सिद्धी रथाङ्ग मङ्गल वसु ।<br>[8]ऋषिसृष्टा युग योग्य लक्ष्मी सर्वजनप्रिया ॥<br>वर्ग १ श्लो० १४५ पत्र. ३४ |
| कङ्कुष्ठ **काक**कुष्ठं **तु** विडङ्ग र**ङ्गदा**यकम् ।<br>रेचकं पुलकं हासं शोधनं **काक**पालकम् ॥<br>पत्र. ९७ | कङ्कुष्ठ कालकुष्ठं **च** विरङ्ग [9]रङ्ग**ना**यकम् ।<br>रेचकं पुलक हासं शोधनं **काल**पालकम् ॥<br>वर्ग ३ श्लो० १४१ पत्र १२३ |
| परूषकः **परुः प्रोक्तो** नील**पर्णः** परापरः ।<br>परिमण्डलम**ल्पा**स्थि परुष चापि नामत ॥<br>पत्र ९८ | परूषकं **परु प्रोक्तं** [10]नील**वर्णं** [11]परा**वरम्** ।<br>परिमण्डलम**ध्या**स्थि [12]परुष चापि नामत ॥<br>वर्ग ५ श्लो० ६२ पत्र १८० |

---

**१. हरिद्रा वर°** क ख. ग. घ ङ ॥ **२. च हरिद्रा पीत°** झ. ॥ **३. °यका स्मृता ।** क च, **°यकः स्मृतः ।** ग. घ ॥ **४. °पीतका ।** क. घ. ङ च ॥ **५. कुसुम्भला ।** घ. ङ. च. ॥ **६. धीरः श्रीमानृषभको वृषः** क घ ङ. च. ॥ **७. वृषाणी** क. ख. ॥ **८. ऋषिश्रेष्ठा** क. ङ च ॥ **९. रङ्गदाय°** क ख ॥ **१०. नीलपर्णं** छ. ण. ॥ **११. परापरम् ।** ङ छ. झ ण ॥ **१२. °मल्पास्थि**

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
|---|---|
| खर्जूरी तु खरस्कन्धा कषाया मधुराऽग्रजा। दुष्प्रधर्षा दुरारोहा नि श्रेणिः स्वादुमस्तका ॥ पत्र. ९८ | खर्जूरी तु खरस्कन्धा कषाया मधुरामजा[1]। दुष्प्रधर्षा दुरारोहा नि श्रे**णी** स्वादुमस्तका ॥ वर्ग ५ श्लो०५३ पत्र १७८ |
| तालो ध्वजद्रुम प्रांशुर्दीर्घस्कन्धो दुरारुह । तृणराजो दीर्घतरुर्लेख्यपत्रो द्रुमेश्वरः ॥ पत्र. ९९ | तालो ध्वजद्रुम प्रांशुर्दीर्घस्कन्धो दुरारुहः। तृणराजो दीर्घतरुर्लेख्यपत्रो द्रुमेश्वरः ॥ वर्ग ५ श्लो०६८ पत्र १८२ |
| **नालिकेरो** रसफल **सतुङ्ग** **कूर्चकेसर**। **लतावृक्षो** दृढफलो लाङ्गली दाक्षिणात्यक ॥ पत्र १०० | **नारिकेलो** रसफल [2]**सुतुङ्ग** **कूर्चशेखरः**। **तालवृक्षो** दृढफलो लाङ्गली दाक्षिणात्यक. ॥ वर्ग ५ श्लो०७४ पत्र. १८३ |
| स्यात् पूगफलमुद्वेगं स्रसि घोण्टाफल मनम्। चिक्कण **वल्कलं चिक्कं गवां मदकरं** च तत् ॥ पत्र. १०१ | स्यात् पूगफलमुद्वेग स्रसि [3]घोण्टाफल **स्मृ**तम्। चिक्कण **चिक्कणा चिक्का गुर्वाकः खपुरं** च तत् ॥ वर्ग ३ श्लो०३९ पत्र १०३ |
| सिन्दुवार श्वेतपुष्प सिन्दुक सिन्दुवा**रिका**। नीलपुष्प शीतसहो निर्गुण्डी नीलसिन्दु**कः** ॥ पत्र. १०३ | सिन्दुवार श्वेतपुष्प [4]सिन्दुक **सिन्दुवारकः**। नीलपुष्प शीतसहो निर्गुण्डी [5]नीलसिन्दु**का** ॥ वर्ग ४ श्लो०८१ पत्र १५० |
| शेफालिकाऽन्या निर्गुण्डी **वनौका** नीलमञ्जरी। शुक्लाऽन्या श्वेतसुरसा भूत**वेशी** च कथ्यते ॥ पत्र १०४ | शेफालिकाऽन्या निर्गुण्डी **वनजा** नीलमञ्जरी। शुक्लाऽन्या श्वेतसुरसा भूत**केशी** च कथ्यते ॥ वर्ग ४ श्लो० ८३ पत्र १५० |
| प्रियङ्गु प्रियवल्ली च फलिनी कङ्गुनी प्रिया। वृत्ता गोवन्दनी श्यामा कारम्भा वर्णभेदिनी ॥ पत्र १०५ | प्रियङ्गु प्रियवल्ली च फलिनी कङ्गुनी प्रिया। वृत्ता गोवन्दनी श्यामा कारम्भा वर्णभे[6]दिनी ॥ वर्ग ३ लो०१६ पत्र ९७ |
| मधुयष्टी च यष्टी च यष्टीमधु मधुस्रवा। यष्टी**मधूकं मधुकं** यष्ट्याह्वं मधुयष्टिका ॥ तल्लक्षण क्लीतनं **च** क्लीतक क्लीतका च सा। स्थलजा जलजाऽन्या **च** मधुपर्णी मधूलिका ॥ पत्र १०६ | मधुयष्टी च यष्टी च यष्टीमधु मधुस्रवा। यष्टी**कं मधुकं चैव** यष्ट्याह्वं मधुयष्टिका ॥ तल्लक्षण क्लीत**नकं** क्लीतनं क्ली**तिका** च सा। स्थलजा जलजाऽन्या **तु** मधुपर्णी मधूलिका ॥ वर्ग १ लो०१४२,१४४ पत्र ३३,३४ |
| अश्वगन्धा वाजिगन्धा **कुम्भको**ऽश्वावरोहक। **वराह**कर्णी तुरगी बल्या वाजीकरी मता ॥ पत्र. १०६ | अश्वगन्धा वाजिगन्धा **कञ्चुका**ऽश्वावरोहक। **वाराह**कर्णी तुरगी बल्या वाजिकरी स्मृता ॥ वर्ग १ लो०२७२ पत्र ६२ |
| अजशृङ्गी मेषशृङ्गी सर्पदंष्ट्रा च वर्त्तिका। द्वितीया दक्षिणावर्ता वृश्चिकाली विषाणिका ॥ पत्र. १०७ | अजशृङ्गी मेषशृङ्गी सर्पदंष्ट्रा च वर्तिका। द्वितीया दक्षिणावर्ता वृश्चिकाली विषाणिका ॥ वर्ग १ श्लो०८७ पत्र. २३ |

---

१ °रा रसा। तु° क. ड.॥ २. सुगन्धः क. ड. ॥ ३. श्यावफलं ख ग. ङ ॥ ४. सिन्धुकः सिन्धुवा° क ग ॥ ५. सीतसिन्धुका ड. ॥ ६. °मेदनी क. ख. ग ङ ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
|---|---|
| शृङ्गी कर्कटशृङ्गी च कुलीरा कर्कटाह्वया ।<br>कुलिङ्गशृङ्गी वक्रा च महाघोषा नताङ्ग्यपि ॥<br>चन्द्रा स्वादु विषाणी च प्रोक्ता च निजमूर्द्धजा ॥<br>पत्र १०८ | शृङ्गी कर्कटशृङ्गी च कुलीरा कर्कटाह्वया ।<br>कुलीरशृङ्गी वक्रा च महाघोषा नताङ्गिनी ॥<br>चन्द्रास्पदा विषाणी च शृङ्गी वनजमूर्धजा ।<br>वर्ग १ श्लो०८५,८६ पत्र. २२ |
| कण्टकारी च दु स्पर्शा क्षुद्रा व्याघ्री निदिग्धिका ।<br>कण्टालिका कण्टकिनी धावनी दुष्प्रधर्षणी ॥<br>पत्र १०८ | कण्टकारी तु दु स्पर्शा क्षुद्रा व्याघ्री निदिग्धिका ।<br>कण्टालिका कण्टकिनी धावनी दुष्प्रधर्षिणी ॥<br>वर्ग १ श्लो०९५ पत्र २५ |
| बृहती सिंहयनाकान्ता वार्ताकी राष्ट्रिका कुली ।<br>विशदा स्थूलभण्टाकी महती तु महोटिका ॥<br>पत्र १०९ | बृहती सिंहिकाकान्ता वार्ताकी राष्ट्रिका कुली<br>विषदा [2]स्थूलकण्टाकी महती तु महोटिका ॥<br>वर्ग १ श्लो०९३ पत्र. २४ |
| विदारिका मता शुक्ला स्वादुकन्दा सृगालिका ।<br>वृक्षकन्दा विदारी च वृक्षवल्ली विडालिका ॥<br>पत्र ११० | विदारिका मता शुक्ला स्वादुकन्दा शृगालिका ।<br>[4]वृष्यकन्दा विदारी च [5]वृष्यवल्ली विडालिका ॥<br>वर्ग १ श्लो०१४७ पत्र ३४ |
| अन्या क्षीरविदारी स्याद् ऋक्षगन्धेक्षुवल्ल्यपि ।<br>क्षीरकन्दा क्षीरयुक्ता क्षीरवल्ली पयस्विनी ॥<br>पत्र ११० | अन्या क्षीरविदारी स्यादिक्षुगन्धेक्षुवल्ल्यपि ।<br>क्षीरवल्ली क्षीरकन्दा क्षीरशुक्ला पयस्विनी ॥<br>वर्ग १ श्लो० १४९ पत्र ३५ |
| पृश्णि (पृश्नि) पर्णी पृथक्पर्णी कलशिर्धावनी गुहा ।<br>शृगालविन्ना धृतिला पर्णी क्रोष्टुकपुच्छिका ॥<br>पत्र १११ | पृष्टिपर्णी पृथक्पर्णी कलशी धावनी गुहा ।<br>शृगालविन्नाऽङ्घ्रिबला पर्णी क्रोष्टुकपुच्छिका ॥<br>वर्ग १ श्लो० ९० पत्र २३ |
| गोक्षुर स्याद् गोक्षुरको भक्षटः स्वादुकण्टक ।<br>गोकण्टको भक्षटक षडन्तः क्षुरकः क्षुरः ॥<br>गोकण्टो गोखुरः कण्टी षडङ्गस्त्रिकटस्त्रिकः ।<br>त्रिकण्टक कण्टफल श्वदंष्ट्रो व्यालदंष्ट्रक ॥<br>पत्र ११२ | गोक्षुर स्याद् गोक्षुरको भक्षकः स्वादुकण्टक ।<br>गोकण्टको भक्षटक षडङ्गः कण्टकत्रिकः ॥<br>गोकण्टो गोक्षुरः कण्टी षडङ्ग क्षुरकः क्षुरः ।<br>त्रिकण्टक कण्टफल श्वदंष्ट्रो व्यालदंष्ट्रकः ॥<br>वर्ग १ श्लो०१०२-१०३ पत्र २६ |
| दन्ती शीघ्रा निकुम्भा स्यादुपचित्रा मकूलकः ।<br>तथोदुम्बरपर्णी च विशल्या च घुणप्रिया ॥<br>पत्र. ११२ | दन्ती शीघ्रा निकुम्भास्यादुपचित्रा मकूलक. ।<br>तथोदुम्बरपर्णी च विशल्या च घुणप्रिया ॥<br>वर्ग १ श्लो० २२३ पत्र ५३ |
| अपामार्गश्च शिखरी प्रत्यक्पुष्पी मयूरक ।<br>अध.शल्याऽथ किणिही दुर्ग्रह खरमञ्जरी ॥<br>स पवोक्त शैखरिको मर्कटी दुरतिग्रह. ।<br>पत्रपुष्पी च वशिर. कुटो मर्कटपिप्पली ॥<br>पत्र. ११४ | अपामार्गस्तु शिखरी प्रत्यक्पुष्पी मयूरक ।<br>अध.शैल्योऽथ किणिही दुर्ग्रह खरमञ्जरी ॥<br>स चैवोक्त. शैखरिको मर्कटी दुरभिग्रह ।<br>पराक्पुष्पी वशीरश्च कण्टी मर्कटपिप्पली ॥<br>वर्ग १ श्लो० २६०-२६१ पत्र. ६० |

१. क्रान्ता ण. ॥ २. स्थूलभण्टा° ख. ग. ॥ ३. °ण्टालीम° ग घ ङ. च. ॥ ४. वृक्षक° ग ॥ ५. वृक्षव° ग ॥ ६. °पवित्रा° क ख. ग. ङ. च. ॥ ७. °शल्यश्च कि° क ख ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
|---|---|
| शुण्ठी महौषध विश्वा नागरं विश्वभेषजम् ।<br>विश्वौषध शृङ्गबेरं कटुभद्रं तथाऽऽर्द्रकम् ॥<br>पत्र ११५ | शुण्ठी महौषधं विश्वं नागरं विश्वभेषजम् ।<br>विश्वौषधं शृङ्गबेरं कटुभद्रं तथाऽऽर्द्रकम् ॥<br>वर्ग २ श्लो० ८२ पत्र. ८६ |
| पुनर्नवा विशाखश्च कठिल्ल शशिलाटकः ।<br>वृश्वी च क्षुद्रवर्षाभूर्दीर्घपत्र कठिल्लकः ॥<br>पत्र ११५ | पुनर्नवा विशाखश्च कठिल्लः शशिवाटिका ।<br>[1]वृश्चीरः क्षुद्रवर्षाभूर्दीर्घपत्र कठिल्लक ॥<br>वर्ग १ श्लो०२७४ पत्र ६२ |
| पुनर्नवाऽपरा क्रूर सद्यो मण्डलपत्रक ।<br>श्वेतमूलो वर्षाकेतुर्महावर्षाभूरुच्यते ॥<br>पत्र ११६ | पुनर्नवोऽपरः क्रूर सद्यो मण्डलपत्रक ।<br>श्वेतमूलो वर्षकेतुर्महावर्षाभुरुच्यते ॥<br>वर्ग १ श्लो०२७६ पत्र ६३ |
| ज्योतिष्मती तु कटभी स्यात् सुवर्णलतेति च ।<br>ज्योतिष्का चाग्निभासा च लवणोद्रा च दुर्दिना ॥<br>पत्र ११६ | ज्योतिष्मती तु कटभी सुवर्णलतिकेति च ।<br>ज्योतिष्काथाऽग्निभासा च लवणोक्ता च [2]दुर्जरा ॥<br>वर्ग १ श्लो०२६७ पत्र ६१ |
| माषपर्णी तु काम्बोजी कृष्णवृन्ता महासहा ।<br>आर्द्रमाषा सिंहवृन्ता मासमाषाऽश्वपुच्छिका ॥<br>पत्र. ११७ | माषपर्णी च काम्बोजी कृष्णवृन्ता महासहा ।<br>आर्द्रमाषा सिंहविन्ना माससमासाऽश्वपुच्छिका ॥<br>वर्ग १ श्लो०१३६ पत्र ३२ |
| मुद्रर्णी क्षुद्रसहा शिम्बी मार्जारगन्धिका ।<br>वनजा रङ्गणी ह्रासा शूर्पपर्णी बुधैः स्मृता ॥<br>पत्र ११७ | मुद्गपर्णी क्षुद्रसहा शिम्बी मार्जारगन्धिका ।<br>वनजा रिङ्गिणी ह्रस्वा शूर्पपर्ण्यावुभे स्मृते ॥<br>वर्ग १ श्लो०१३८ पत्र ३२ |
| तामलक्युत्तमा ताली तमालं तु तमालिनी ।<br>वितुन्नकस्त्वजटा च झाटा साऽऽमलकीति च ॥<br>पत्र ११८ | तामलक्यजटा ताली तमाल तु तमालिनी ।<br>वितुन्नभूता तमकं भूधात्री श्वामलक्यपि ॥<br>वर्ग ३ श्लो०८४ पत्र ११२ |
| हरिद्रा पीतिका पिङ्गा रजनी रञ्जिनी निशा ।<br>गौरी वर्णवती पीता हरिता वरवर्णिनी ॥<br>हलवी हलना श्रेष्ठा क्षेम वर्णविलासिनी ।<br>विवध्नी च जयन्ती च दीर्घरक्ता सुरङ्गिणी ॥<br>पत्र. ११९ | हरिद्रा पीतिका पिङ्गा रजनी रञ्जिनी निशा ।<br>गौरी वर्णवती पीता [3]हरिता वरवर्णिनी ॥<br>[4]हलदीका भद्रलता हेया वर्णविलासिनी ।<br>विवध्नी च जयन्ती च दीर्घरक्ता तु रङ्गिणी ॥<br>वर्ग १ श्लो० ५४–५५ पत्र १७ |
| चक्रमर्दस्त्वेडगजो मेषाक्षोऽण्डगजः स्मृतः ।<br>प्रपुनाट प्रपुनाटश्चक्री त्वावर्तकः स च ॥<br>पत्र. ११९ | चक्रमर्दस्त्वेडगजो मेषाक्षोऽण्डगजस्तथा ।<br>प्रपुन्नाट प्रपुन्नाडश्चक्री त्वावर्तकस्तथा ॥<br>वर्ग ४ श्लो०५ पत्र.१३४ |
| श्रावणी स्यान्मुण्डतिका भिक्षु. श्रवणशीर्षिका ।<br>श्रवणाह्वा प्रव्रजिता परिभ्राजी तपोधना ॥<br>पत्र. १२० | श्रावणी स्यान्मुण्डितिका भिक्षु श्रवणशीर्षिका ।<br>श्रावणाह्वा प्रव्रजिता परिव्राजी तपोधना ॥<br>वर्ग १ श्लो० १५९ पत्र. ३७ |

१. वृश्चिकः ङ ॥ २. दुर्भरा दुर्लभा ग ॥ ३. हरिद्रा क ख ग. घ. ङ. ॥ ४. हलादिका क. ॥ ५. [5]भ्राजी तथा धना । क ङ. च. ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
| --- | --- |
| महाश्रावण्यथाऽन्या तु लोचनीया तथाऽपरा | महाश्रावणिका मुण्डी लोभनीया तथाऽन्यथा |
| कदम्बपुष्पिका प्रोक्ता छिन्नग्रन्थनिका च सा ॥ | कदम्बपुष्पिका प्रोक्ता छिन्नग्रन्थिनिका च सा ॥ |
| पत्र १२० | वर्ग १ श्लो० १६० पत्र. ३७ |
| बाकुची सोमराजी च सोमवल्ली सुवल्ल्यपि । | बाकुची सोमराजी तु सोमवल्ली सुवल्ल्यपि । |
| अवल्गुज कृष्णफली सैव पूतिफली मता ॥ | अवल्गुजा कृष्णफला सैव पूतिफला मता ॥ |
| चन्द्रलेखेन्दुलेखा च शशिलेखा च सा मता । | चन्द्रलेखेन्दुलेखा च शशिलेखा मता च सा |
| पूतिपर्णी कालमेषी दुर्गन्धा कुष्ठनाशनी ॥ | पूतिकर्णी कालमेषी दुर्गन्धा कुष्ठनाशिनी ॥ |
| पत्र १२१ | वर्ग १ श्लो० १६५-६ पत्र. ३८ |
| रास्ना युक्तरसा रस्या श्रेयसी रसना रसा । | रास्ना युक्तरसा रस्या श्रेयसी रसना रसा । |
| सुगन्धमूलाऽतिरसा सैव युक्तरसा स्मृता ॥ | सुगन्धमूलाऽतिरसा सैव पुष्टिरसा [1]स्मृता । |
| पत्र १२१ | वर्ग १ श्लो० २७० पत्र ६२ |
| अन्या महासुगन्धा तु सुवहा गन्धनाकुली । | अन्या महासुगन्धा च सुवहा गन्धनाकुली । |
| सर्पाक्षी नकुलेष्टा च छत्राकी विषमर्दनी ॥ | सर्पाक्षी नकुलेष्टा च [2]छत्राकी विषमर्दिनी ॥ |
| पत्र. १२२ | वर्ग ४ श्लो० १०५ पत्र १५५ |
| कुठेरकस्तु वैकुण्ठ क्षुद्रपत्रोऽर्जक स्मितः । | कुठेरकस्तु वैकुण्ठ क्षुद्रपर्णोऽर्जकस्तथा । |
| वटपत्रः कुठेरोऽन्य पर्णासो बिल्वगन्धक ॥ | वटपत्र कुठेरोऽन्य पर्णासो[3] बिल्वगन्धक ॥ |
| कुठेरकस्तृतीयोऽन्यो मालुक कृष्णमालुक । | कुठेरकस्तृतीयोऽन्यः शालुक. कृष्णशालुक । |
| कृष्णार्जक कालताल कराल कृष्णमल्लिकः ॥ | कृष्णार्जक कालमाल कराल कृष्णमल्लिका ॥ |
| पत्र १२३ | वर्ग ४ श्लो० ५४, ५६ पत्र १४५ |
| सुरसा तुलसी ग्राम्या तुलसी बहुमञ्जरी । | सुरसा तुलसी ग्राम्या सुरभी बहुमञ्जरी । |
| आपीता राक्षसी गौरी भूतघ्नी देवदुन्दुभि ॥ | अपेतराक्षसी गौरी भूतघ्नी देवदुन्दुभि ॥ |
| पत्र १२४ | वर्ग ४ श्लो० ५० पत्र १४४ |
| जम्बीरः खरपत्रश्च फणी चोक्त फणिज्झक । | जम्बीर खरपत्रश्च फणी चोक्त फणिज्झक. । |
| मरुबको मरुवको मरुन्मरिचकस्तथा ॥ | मरुत्तको मरुबको मरुर्मरुबकस्तथा ॥ |
| पत्र १२४ | वर्ग ४ श्लो०५२ पत्र १४४ |
| त्रायमाणा कृतत्राणा त्रायन्ती त्रायमाणिका । | त्रायमाणा कृतत्राणा त्रायन्ती त्रायमाणका । |
| बलभद्रा बलदेवा वार्षिकं गिरिसानुजा ॥ | बलदेवा बलभद्रा वार्षिकं [4]गिरिजानुजा ॥ |
| पत्र. १२५ | वर्ग १ श्लो० २५४ पत्र ५९ |
| यासो यवासकोऽनन्ता बालपत्रोऽधिकण्टक. । | यासो यवासकोऽनन्तो बालपत्रोऽधिकण्टकः । |
| वीरमूल. समुद्रान्ता दीर्घमूलो मरुद्भव ॥ | दूरमूलः समुद्रान्तो दीर्घमूलो मरुद्भव ॥ |
| धन्वयासो दुरालम्भा ताम्रमूली च कच्छुरा । | धन्वयासो दुरालम्भा ताम्रमूली च कच्छुरा । |
| दुरालभा च दुःस्पर्शा यासो धन्वयवासकः ॥ | दुरालम्भा च दुःस्पर्शा यासो धन्वयवासक ॥ |
| पत्र १२५ | वर्ग १ श्लो० २१,२० पत्र. १०-११ |

१ मता क ग घ ङ च. ॥ २ च्छत्राक्षी ङ छ झ ॥ ३ °सो गन्धबिल्वकः क ॥ ४ गिरितानुगम् । ङ च; गिरिसानुजम् झ ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
| --- | --- |
| किराततिक्तको हैम. काण्डतिक्तः किरातक. । | किराततिक्तको हैम काण्डतिक्तः किरातक. । |
| भूनिम्बोऽनार्यतिक्तश्च कैरातो रामसेनकः ॥ | भूनिम्बोऽनार्यतिक्तश्च[1] किरातो रामसेनक ॥ |
| कैडर्य. पिचुमन्दश्च निम्बो रिष्टो वरत्वचः । | [2]कडर्यं पिचुमन्दश्च निम्बोऽरिष्टो वरत्वच । |
| छर्दनो हिङ्गुनिर्यास· प्रियमालश्च पर्वतः ॥ | छर्दिघ्नो हिङ्गुनिर्यास प्रियशालश्च पार्वत ॥ |
| नेपाल· कथितश्चान्यो जात्यश्चैव ज्वरान्तक | नेपाल[3] कथितश्चान्यो जातिभेदो ज्वरान्तकः । |
| नाडीतिक्तोऽर्द्धतिक्तश्च निद्रारि सन्निपातहा॥ | महातिक्तश्च तिक्तश्च निद्रारि सन्निपातहा ॥ |
| पत्र १२६ | वर्ग १ श्लो० ३३–३५ पत्र १४ |
| कुष्ठं रोगो गदो व्याधिरुत्पलं पाकलं रुजा । | कुष्ठं रोगोऽगदो व्याधिरुत्पल पाकलं रुजा । |
| पत्र १२७ | वर्ग ३ श्लो० ४९ पत्र. १०५ |
| वाल्कं वारि तोयं च ह्रीवेरं जलमम्बु च । | बालक वारि तोयं च ह्रीबेरं जलमम्बु च । |
| केशं वज्रमुदीच्य च पिङ्गमाचमन कचम् ॥ | केश्यं वज्रमुदीच्यं च पिङ्गमाचमनं कचम् ॥ |
| पत्र १२७ | वर्ग १ श्लो० ४७ पत्र १६ |
| शटी षटी पलाशः स्यात् ज्ञेया पृथुपलाशिका | सटी सठी पलाशश्च ज्ञेया पृथुपलाशिका । |
| सुगन्धमूला गन्धोली षड्ग्रन्था सुव्रता वधू । | सुगन्धमूला गन्धाली षड्ग्रन्था सुव्रता वधू ॥ |
| पत्र १२८ | वर्ग १ श्लो० ६१ पत्र १८ |
| एलावालुकमालुक वालुकं हरिवालुकम् । | एलावालुकमालुकं वालुक हरिवालुकम् । |
| एल्वालकं कपित्थ च दुर्वर्णं प्रसरं दृढम् ॥ | एलवालुकं कपित्थ[4] स्याद् दुर्वर्णं प्रसर दृढम् ॥ |
| पत्र १२८–१२९ | वर्ग ३ श्लो०७६ पत्र १११ |
| कुङ्कुमं रुधिरं रक्तमसृगलं च पीतकम् । | कुङ्कुमं रुधिरं रक्तमसृगल च पीतकम् । |
| काश्मीरं चारु वाह्लीकं सङ्कोच पिशुन वरम्॥ | काश्मीरं चारु वाह्लीक सङ्कोचं पिशुनं वरम् । |
| पत्र.१२९ | वर्ग ३ श्लो०१२ पत्र. ९५ |
| जाती मनोज्ञा सुमना राजपुत्री प्रियंवदा । | जाती मनोज्ञा सुमना राजपुत्री प्रियंवदा । |
| मालती ह्यगन्धा च चेतिका तैलभाविनी ॥ | मालती ह्यगन्धा च चेतिका [5]तैलभाविनी ॥ |
| पत्र १३० | · वर्ग ५ श्लो० १३७ पत्र. १९८ |
| जातीफल जातिसस्य शालूकं मालतीफलम् । | जातीफल जातिसस्यं शालूक मालतीफलम् । |
| मज्जासारं जातिशृतं पुट सौमनस फलम् ॥ | [6]मदशौण्डं जातिशृङ्गं पुटं सौमनस फलम् । |
| पत्र १३० | वर्ग ३ श्लो०३५ पत्र. १०२ |
| यूथिका बालपुष्पी च पुष्पगन्धा गुणोज्ज्वला । | यूथिका बालपुष्पा तु पुष्पगन्धा गुणोज्ज्वला । |
| गणिका चारुमोटा च शिखण्डी ॥ | [7]गणिका चारुमोदा च शिखण्डी ॥ |
| पत्र. १३१ | वर्ग ५ श्लो० १४८ पत्र २०० |
| स्वर्णयूथिका ॥ | [8]स्वर्णयूथिका |
| यूथशालिनी | सुवर्णयूथा हरिणी पीतिका पीतयूथिका । |
| पत्र १३१ | वर्ग ५ श्लो०१४८–९ पत्र. २०० |

---

१ °श्च कैरातो ख ग छ ॥ २ कौण्डर्यः क घ ङ. चं. ॥ ३. °लः पथि-कश्चान्यो क ख घ ङ च ॥ ४. °त्थं च दुर्वर्णप्र° क. ख. ङ. ॥ ५ तिलभाविनी ग. ॥ ६. मज्जासारं जा° ग. ॥ ७. कणिका क. ङ. ॥ ८ स्वर्णपुष्पिका ङ. ॥.

## निघण्टुशेषटीका

प्रोक्ताऽन्या शङ्खधवला नामत शङ्खयूथिका ॥
पत्र १३१

कुन्द सुमकरन्दश्च श्वेतपुष्पो मनोहर ।
अट्टाट्टहासो भृङ्गस्तु शुक्लशाल्योदनोपम ।
पत्र १३२

ग्रीष्माऽतिसुरभि कान्ता सुगन्धा वनमालिनी ।
सुकुमारा शिखरिणी नेमाली नवमालिका ।
पत्र १३३

मल्लिका शीतभीरुश्च मदयन्ती प्रमोदनी ।
मदनीया गवाक्षी च भूपदष्टापदी तथा ॥
पत्र १३३

वार्षिकी त्रिपुटा त्र्यस्रा सुरूपा सुभगा प्रिया ।
श्रीमती षट्पदानन्दा सुवर्षा मुक्तबन्धनी ॥
पत्र १०४

तरणी रामतरणी वर्णिनी चारुकेसरा ।
रभ्या कुमारी गन्धाढ्या द्विरेफगणसम्मता ॥
पत्र १३४

सैरेयक· सहचरः सैरेयश्च सहाचरः ।
पत्र १३५

पीतो रक्तोऽथ नीलश्च कुसुमैस्त विभावयेत् ॥
पीत· कुरण्टको ज्ञेयो रक्तः कुरबकः स्मृत ।
नील आर्तगलो दासी बाण ओदनपाक्यपि ॥
पत्र १३५

चित्रको दहनो व्याल पाठीनो दारुणोऽग्निक ।
ज्योतिष्को वल्लरी वह्नि. पाठी पाली कुटः शिखी ।
पत्र १३६

वासन्ती प्रहसन्ती च सुवसन्ता वसन्तजा ।
शोकरा शीतसंवासा सेव्या भ्रमरबान्धवा ॥
पत्र. १३७

नीलिनी नीलिका काली ग्राम्या तूणी विशोधनी ।
तुत्था श्रीफलिका मेला भारवाही च रञ्जनी ।
पत्र १३८

## धन्वन्तरीयनिघण्टु

प्रोक्ताऽन्या शङ्खधवला नामत शङ्खयूथिका ।
वर्ग ५ श्लो० १४९ पत्र. २००

कुन्द सुमकरन्दश्च सदापुष्पो मनोहर ।
अट्टहासो भृङ्गसुहृच्छुक्लः शाल्योदनोपम ॥
वर्ग ५ श्लो०१५० पत्र. २०१

ग्रैष्मी तु सुरभि कान्ता सुगन्धा वनमालिनी ।
सुकुमारा शिखरिणी [1]नेपाली वनमालिका ॥
वर्ग५ श्लो० १४० पत्र १९८

मल्लिका शीतभीरुश्च मदयन्ती प्रमोदिनी ।
मदनीया गवाक्षी च [2]भूपदष्टपदी तथा ॥
वर्ग ५ श्लो०१३४ पत्र १९७

वार्षिकी त्रिपुटा त्र्यस्रा सुरूपा सुभगा प्रिया ।
श्रीमती षट्पदानन्दा सुवर्षा मुक्तबन्धना ॥
वर्ग ५ श्लो १३६ पत्र- १९७

तरणी रामतरणी कणिका चारुकेसरा ।
सहा कुमारी गन्धाढ्या द्विरेफगणसम्मता ॥
वर्ग ५ श्लो०१४५ पत्र. १९९

सैरेयक सहचर· सैरेयश्च सहाचर ।
वर्ग १ श्लो० २७८ पत्र ६३

पीतो रक्तोऽथ नीलश्च कुसुमैस्त विभावयेत् ॥
पीतः कुरण्टको ज्ञेयो रक्त· कुरबक स्मृत ।
नील आर्तगलो दासी बाण ओदनपाक्यपि ॥
वर्ग १ श्लो० २७८–२७९ पत्र.६३

चित्रको दहनो व्याल [3]पाठिनो दारुणोऽग्निक ।
[4]ज्योतिष्को वल्लरी वह्नि. [5]पाली पाठी कटुः शिखी ॥
वर्ग २ श्लो० ८० पत्र ८६

वासन्ती प्रहसन्ती च सुवसन्ता वसन्तजा ।
शोभना शीतसंवासा सेव्या भ्रमरबान्धवा ॥
वर्ग ५ श्लो० १३९ पत्र १९८

नीलिनी नीलिका काला ग्राम्या तूणी विशोधनी ।
तुत्था श्रीफलिका [6]मोचा भारवाही च रञ्जनी ॥
वर्ग १ श्लो० २३२ पत्र. ५५

---

१. नेवाली ख ॥ २ भूतपर्य्यपदी क ख ॥ ३ पाठीनो दा° ग घ. ॥ ४. ज्योतिष्कश्चा· दणोवह्निः घ ङ. ॥ ५. पाठी पाठिः शठः शिखी ग. ॥ ६. मेला क. ख. ग. ङ घ. ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
| --- | --- |
| दमनकं पाण्डुरागं दान्तं गन्धोत्कटं मुनिम् । पुण्डरीकं ब्रह्मजटमृषिपुत्रं तपस्विनम्॥ पत्र ११८ | दमनः पाण्डुरागः स्याद् दान्तो गन्धोत्कटो मुनिः । पुण्डरीको ब्रह्मजटा तपस्वी ऋषिपुत्रक ॥ वर्ग ३ श्लो० ६४ पत्र १०९ |
| धत्तूरकः स्मृतो धूर्तो देवता कितव· शठः । उन्मत्तको मदनकतरुस्तलफलस्तथा ॥ पत्र. १३९ | धत्तूरः कनको धूर्तो देवता कितव. शठः । उन्मत्तको [1]मदनकः कालिम्च हरवल्लभः॥ वर्ग ४ श्लो० ७ पत्र १३५ |
| शङ्खपुष्पी कम्बुपुष्पी शङ्खाह्वा शङ्खमालिनी । किरीटी शङ्खकुसुमा मेध्या वनविलासिनी ॥ पत्र. १४० | शङ्खपुष्पी कम्बुपुष्पी शङ्खाह्वा[2] कम्बुमालिनी । [3]तिलकी शङ्खकुसुमा मेध्या वनविलासिनी ॥ वर्ग ४ श्लो० ११३ पत्र.१५६ |
| कर्चूरको गन्धमूलो द्राविड काल्य एव च । वेधमुख्यो दुर्लभश्च कस्यचित् सम्मता शटी ॥ पत्र. १४० | कर्चूरो गन्धमूलश्च द्राविड [4]कार्श्य एव च । वेधमुख्यो दुर्लभश्च कस्यचित् सम्मतः सठी॥ वर्ग ३ श्लो० ९४ पत्र. ११४ |
| अजमोदा बस्तमोदा दीप्यको लोचमस्तकः । खराश्वा कारवी वल्ली मोचा हस्तिमयूरकः॥ पत्र. १४१ | अजमोदा बस्तमोदा दीप्यको लोचमर्कटः । खराह्वा कारवी वल्लिर्मोचा हस्तिमयूरिका ॥ वर्ग २ श्लो० ९८ पत्र ८९ |
| यवानी दीपको दीप्यो यवसाह्वा यवानिका । यमानिकोग्रगन्धा च दीपनीया च दीपनी ॥ पत्र १४१ | यवानी दीपको दीप्यो यवसाह्वो [5]अथाग्रजः । यवानिकोग्रगन्धा च दीपनीया च दीपनी ॥ वर्ग २ श्लो० ९१ पत्र ८८ |
| पर्पट स्यात् पर्पटको वरतिक्तश्च नामतः । रजो रेणुश्च पांसुश्च कवचश्चर्मकण्टक. ॥ पत्र १४२ | पर्पट स्यात् पर्पटको वरतिक्तः[6] सुतिक्तकः । रजो रेणुश्च [7]पांशुश्च कवचो [8]चर्मकण्टक ॥ वर्ग १ श्लो० ४५ पत्र १६ |
| बला भद्रौदनी वाटी समांशा खरयष्टिका । महासमांशौदनिका शीतपाक्योदनाह्वया ॥ पत्र. १४३ | बला भद्रौदनी वाटी समङ्गा खरयष्टिका । महासमङ्गौदनिका शीतपाक्योदनाह्वया ॥ वर्ग १ श्लो०२८० पत्र ६४ |
| महाबला वर्षपुष्पी तथा वाट्यायनी स्मृता । सहदेवी देवसहा पीतपुष्पी बृहत्फला ॥ बलिकाऽतिबला ज्ञेया वाट्यपुष्पी च कङ्कता । ऋष्यप्रोक्ता ऋक्षगन्धा सैव भूरिबला मता ॥ पत्र. १४४ | महाबला वर्षपुष्पी तथा वाट्यायनी स्मृता । सहदेवा देवसहा पीतपुष्पी बृहत्फला ॥ बलिकाऽतिबला प्रोक्ता वाट्यपुष्पी च कङ्कता । वृष्या प्रोक्ता वृष्यगन्धा सैव भूरिबला मता॥ वर्ग १ श्लो०२८२, २८६ पत्र. ६५ |
| वात-पित्तापहं ग्राहि बल्यं वृष्यं बलात्रयम् । पत्र. १४४ | वातपित्तापहं ग्राहि बल्यं वृष्य बलात्रयम् । वर्ग १ श्लो०२८७ पत्र. ६५ |

१ मदकरः कालि° क ख. ग. ॥ २. °ह्वा शङ्खमालिनी क. ङ. ॥ ३. तिरीटी क. ख ङ. ॥ ४. कार्श्य क. । ५. यवानिका ख. ग. ॥ ६. तिक्तकश्च नामतः । रजो क. ख. ग. घ. ङ ॥ ७ पांसुश्च ग. ङ. ॥ ८. ब्रह्मकण्टकः ग; कर्मकण्टकः ङ. ॥ ९ °बला वाट्यपुष्पी क. ॥ १०. °पुष्पा बृ° क. ङ. ॥

## निघण्टुशेषटीका

हिङ्गु रामठमत्युग्रं जन्तुघ्नं भूतनाशनम् ।
अगूढगन्धं बाल्हीकं जरणं सूपधूपनम् ॥
पत्र १४५

हिङ्गुपत्री तु कारवी पृथ्वीका पृथुका पृथु. ।
बाष्पिका दीर्घिका तन्वी बिल्विका दारुपत्रिका ।।
नाडी हिङ्गुपलाशा च जतुका रामठी रसा ।
वशपत्री वेणुपत्री पिण्डा हिङ्गु शिवाटिका ॥
पत्र १४६

काकजङ्घा ध्वाङ्क्षजङ्घा मद्ध्वाङ्क्षा सुलोमशा
पारापतपदी दासी नदीकान्ता प्रचीबला
पत्र १४६

काकनासा ध्वाङ्क्षनासा काकतुण्डफला च सा ।
सुरङ्गा तस्करा स्नायुर्ध्वाङ्क्षतुण्डफला मता ॥
पत्र १४७

पाषाणभेदकोऽश्मघ्न शिलाभेदोऽश्मभेदक ।
स चैवोपलभेदश्च नगविध्वंसकोऽश्मभित्॥
पत्र १४७

हयुषा वपुषा विस्रा विस्रगन्धा विगन्धिका ।
पत्र १४७

अन्याऽश्वत्थफला(?)कच्छूघ्नी ध्वाङ्क्षनासिका ।
पत्र १४८

शणपुष्पी बृहत्पुष्पी स चोक्कः शणघण्टकः ।
महाशणो माल्यपुष्पी वामनी कटुतिक्तका ।
पत्र १४८

शालपर्णी स्थिरा सौम्या त्रिपर्ण्यतिगुहा ध्रुवा ।
विदारिगन्धांशुमती दीर्घमला च पीतनी ॥
सर्वानुकारिणी तन्वी दीर्घपर्णो च पर्णिका ॥
पत्र १४९

भार्गी गर्दभशाकश्च पद्मा ब्राह्मणयष्टिका ।
अङ्गारवल्ली हञ्जी च बर्दो बर्बरकस्तथा ।
शुक्रमाता च कासघ्नी भृगुजा भार्गवर्पाणिनी।
पत्र १५०

## धन्वन्तरीयनिघण्टु

हिङ्गु रामठमत्युग्र जन्तुघ्नं[1] भूतनाशनम् ।
अगूढगन्धं वाह्लीकं जरणं सूपधूपनम् ॥
वर्ग २ श्लो० ३६ पत्र ७७

हिङ्गुपत्री तु कवरी पृथ्वीका पृथुला पृथुः ।
बाष्पिका दीर्घिका तन्वी बिल्विका दारुपत्रिका ॥
नाडी हिङ्गुपलाशा[2]तु जन्तुका रामठी च सा ।
वशपत्री वेणुपत्री पिण्डहिङ्गु शिवाटिका ॥
वर्ग २ श्लो० ३८, ४० पत्र ७७

काकजङ्घा ध्वाङ्क्षजङ्घा काकपादा तु लोमशा ।
पारावतपदी दासी नदीकान्ता प्रचीबला ॥
वर्ग ४ श्लो० २३ पत्र १३८

काकनासा ध्वाङ्क्षनासा काकतुण्डफला च सा ।
सुरङ्गी तस्करस्नायुर्ध्वाङ्क्षतुण्डफला मता ॥
वर्ग ४ श्लो० २५ पत्र १३९

पाषाणभेदकोऽश्मघ्न शिलाभेदोऽश्मभेदक ।
स चैवोपलभेदश्च नगभिद् दृषदश्मजित् ॥
वर्ग १ श्लो० १५७ पत्र ३६

हपुषा विपुषा [3]विश्वा विश्वगन्धाऽतिगन्धिका ।
वर्ग २ श्लो० ९ पत्र ७०

अपरा चाश्वत्थफला [4]कच्छूघ्ना ध्वाङ्क्षनाशिनी ॥
वर्ग २ श्लो० ९ पत्र ७०

[5]शणपुष्पी बृहत्पुष्पी सा चोक्ता[6] शणघण्टिका
महाशणो माल्यपुष्पी वमनी कटुतिक्तका ॥
वर्ग १ श्लो० २०० पत्र ४७

शालिपर्णी स्थिरा सौम्या त्रिपर्ण्यतिगुहा ध्रुवा ।।
विदारिगन्धाऽशुमती दीर्घमूला सुपत्रिका ।
सर्वानुकारिणी तन्वी दीर्घपर्णी च पर्णिका ॥
वर्ग १ श्लो० ८७, ८८, ९१ पत्र ३

भार्गी गर्दभशाकं च पद्मा ब्राह्मणयष्टिका ।
अङ्गारवल्ली [7]फञ्जी [8]च सैव ब्रह्मसुवर्चला ॥
[9]शक्रमाता च कासघ्नी भृङ्गजा भार्गवा[10] मता॥
वर्ग १ श्लो० ६८, ६९ पत्र २०

---

१ °घ्नं शूलनाशनम् । क ङ. ॥ २ °शाख्यो ज° क. ख घ. ङ ॥ ३. विश्वा मिश्रगन्धा छ ॥ ४ कच्छुघ्नी ङ ॥ ५. पणपुष्पी क. ङ. च ॥ ६° क्ता घण° क. ॥ ७. °घानो मा° क. भ ॥ ८. फाञ्जी ञ. ॥ ९. °श्रीयं वर्चो बर्बरकस्तथा ॥६॥ श° क. छ च ॥ १०. शुक्रमाता ञ. ॥ ११. °वामणीः । ञ ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
| --- | --- |
| यवतिक्ता शङ्खिनी च दृढपादा विसर्पिणी ।<br>नाकुली चाक्षिपिण्डा च चित्रमाला यशस्करी॥<br>पत्र १५१ | यवतिक्ता शङ्खिनी तु दृढपादा विसर्पिणी ।<br>नाकुली चाक्षपीडा च नेत्रमीला यशस्करी ॥<br>वर्ग १ श्लो० २५६ पत्र ५९ |
| तेजस्विनी तेजवती तेजोह्वा तेजनी तिजा ।<br>अश्वघ्नी वल्कला शीता पारिजाता महौजसी ।।<br>पत्र १५१ | तेजस्विनी तेजवती [1]तेजोह्वा तेजनीति च ।<br>[2]अश्वघ्नी वल्कला शीता पारिजाता महौजसी ॥<br>वर्ग १ श्लो० २६६ पत्र ६१ |
| मिश्रेया तालकर्णी च तालपर्णी मिसिस्तथा ।<br>शालेय स च शालीनो नाम्ना शीतशिवो मत ॥<br>पत्र. १५२ | मिश्रेया तालपर्णी तु तालपत्री मिशिस्तथा ।<br>शालेय स च शालीनो नाम्ना शीतशिवो मत ॥<br>वर्ग २ श्लो० ४ पत्र ६९ |
| तालीसकं तु तालीस पत्र तालीसपत्रकम् ।<br>तद्वदामलकीपत्र पत्राढ्यं च सुखादनम् ॥<br>पत्र १५३ | तालीसकं तु तालीसं पत्रं तालीसपत्रकम् ।<br>नीलमामलकीपत्रं पत्राढ्यं च शुकोदरम् ।<br>वर्ग २ श्लो० ५३ पत्र ८० |
| मासी कृष्णजटा हिंस्रा नलदा जटिलाऽऽमिषी ।<br>जटा च पिशिता मेषी क्रव्यादी च तपस्विनी ॥<br>पत्र १५३ | मासी कृष्णजटा हिंस्रा नलदा जटिला मिशी ।<br>जटा च पिशिता पेशी क्रव्यादी च तपस्विनी ॥<br>वर्ग ३ श्लो० ४५ पत्र १०४ |
| द्वितीया गन्धमासी च केशी भूतजटा स्मृता ।<br>पैशाची पूतना केशी भूतकेशी सुलोमशा ॥<br>पत्र १५४ | द्वितीया गन्धमासी स्यात् केशी भूतजटा स्मृता ।<br>पिशाची पूतना केशी भूतकेशी च लोमशा ॥<br>वर्ग ३ श्लो० ४७ पत्र १०५ |
| मुरा गन्धवती दैत्या गन्धाढ्या गन्धमादनी ।<br>सुरभिर्भूरिगन्धा च कुटी गन्धकुटी स्मृता ॥<br>पत्र. १५४ | मुरा गन्धवती दैत्या गन्धाढ्या गन्धमालिनी ।<br>सुरभिर्भूरिगन्धा च कुटी गन्धकुटी स्मृता ॥<br>वर्ग ३ श्लो०६७ पत्र. १०९ |
| प्रपौण्डरीक चक्षुष्यं पौण्डर्यं पुण्डरीयकम् ।<br>पौण्डरीकं शतपुष्पं सुपुष्पं सानुमानकम् ॥<br>पत्र १५५ | प्रपौण्डरीकं चक्षुष्यं पुण्डर्यः पुण्डरीयकम्<br>[3]सितपुष्पं सुपुष्पं स्याच्छ्रीपुष्प सानुजा-नुजम् ॥<br>वर्ग ३ श्लो०९२ पत्र. ११४ |
| जन्तुवारा जन्तुकृष्णा जतुका रजनी स्मृता ।<br>जननी चैव संस्पर्शा जतुका चक्रवर्तिनी ॥<br>पत्र १५५ | जन्तुकारी जन्तुकृष्णा जतुका रञ्जनी स्मृता ।<br>जननी चैव संहर्षा जन्तुका चक्रवर्तिनी ॥<br>वर्ग ४ श्लो० ८८ पत्र १५१ |
| मांसरोहिण्यतिरुहा वृन्ता चर्मकषा कषा ।<br>विकसा मांसरोहा च रुहा रक्ता प्रकीर्तिता ॥<br>पत्र. १५६ | मांसरोहिण्यतिरुहा वृत्ता चर्म[4]कसा च सा ।<br>विकसा मांसरोहा च रुहा रक्ता प्रकीर्तिता ॥<br>वर्ग ४ श्लो० ९४ पत्र. १५२ |
| रक्तपादी शमीपत्रा समङ्गाऽञ्जलिकारिका ।<br>नमस्कारी गण्डकाली नाम्ना (?रास्ना) खदिरिका मता ॥<br>पत्र. १५६ | रक्तपादी शमीपत्रा समङ्गाऽञ्जलिकारिका ।<br>नमस्कारी गन्धकारी स्पर्शसंकोचपर्णिका<br>वर्ग ४ श्लो० १०९ पत्र. १५५ |

१. तेजोका ग ॥ २. अश्वघ्ना ख कक्षा च त. ॥ ३. शीतपुष्पं ख ॥ ४. कषा च ग;

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
| --- | --- |
| रक्तपादपरा प्रोक्ता त्रिषग्रन्थिस्त्रिपाद्यपि<br>हंसपादी हंसपदी घृतमण्डलकश्च सा ।<br>पत्र १५१ | रक्तपादपरा प्रोक्ता विश्वग्रन्थिस्त्रिपाद्यपि ।<br>हंसपादी हंसपदी घृतमण्डलिका च सा ॥<br>वर्ग ४ श्लो० १११ पत्र. १५६ |
| जलपिप्पल्यभिहिता शारदी तोयपिप्पली<br>मत्स्यादनी मत्स्यगन्धा लाङ्गली शकुलादनी ॥<br>पत्र १५७ | जलपिप्पल्यभिहिता शारदी तोयपिप्पली ।<br>मत्स्यादनी मत्स्यगन्धा लाङ्गली शकुलादनी ॥<br>वर्ग ४ श्लो० ६४ पत्र १४७ |
| धुको वसुक इत्युक्त शिवाङ्क शिवशेखर. ।<br>महापाशुपतश्चैव सुव्रत शिवमल्लिका ॥<br>पत्र. १५८ | धुको वसुक इत्युक्त शिवाह्वः शिवशेखर ।<br>महापाशुपतश्चैव सुव्रत शिवमल्लिका ॥<br>वर्ग ४ श्लो० १९ पत्र. १३८ |
| अतिविषा शुक्लकन्दा ज्ञेया विश्वा च भङ्गुरा ।<br>श्यामकन्दा प्रतिविषा शृङ्गी चोपविषा विषा ॥<br>पत्र १५८ | अतिविषा शुक्लकन्दा ज्ञेया विश्वा चभङ्गुरा ।<br>श्यामकन्दा प्रतिविषा शृङ्गी चोपविषा विषा ॥<br>वर्ग १ श्लो० १० पत्र ८ |
| मेदा ज्ञेया मणिच्छिद्रा माल्यवर्णा धराऽपि च ।<br>महामेदा देवमणिर्वसुच्छिद्रा प्रकीर्तिता ॥<br>पत्र १५९ | मेदा ज्ञेया मणिच्छिद्रा शल्यपर्णी धराऽपि च ।<br>महामेदा देवमणिर्वसुच्छिद्रा प्रकीर्तिता ॥<br>वर्ग १ श्लो० १२७ पत्र. ३० |
| काकादनी काकपीलु काकशिम्बिश्च रक्तिका ।<br>चक्रशल्या ध्वाङ्क्षनखी द्रुमोद्‌धा काकनन्तिका ।<br>चूडामणि शीतपाकी शिखण्डा कृष्णला मता ।<br>उच्चटा ताम्रिका गुञ्जा [चटकी काकमाह्वया] ॥<br>पत्र १६० | काकादनी काकपीलु [1]काकणन्ती च रक्तिका ।<br>वक्रशल्या ध्वाङ्क्षनखी दुर्मोहा काकणन्तिका<br>चूडामणि शीतपाकी शिखण्डी कृष्णला मता ।<br>उच्चटा ताम्रिका गुञ्जा चटकी काकराह्वया ॥<br>वर्ग ४ श्लो० २७,२९ पत्र १३९,१४० |
| पाठाऽम्बष्ठाऽम्बष्ठकी च प्राचीना पापचेलिका ।<br>वृकतिक्ता वनतिक्ता पापिका स्थापनी वृकी ॥<br>पत्र १६१ | पाठाऽम्बष्ठाऽम्बष्ठकी च प्राचीना [2]पापचेलिका<br>वरतिक्ता वृद्धतिक्ता पाठिका स्थापनी वृकी ॥<br>वर्ग १ श्लो० ७० पत्र २० |
| शतावरी शतपदी पीवरीन्दीवरी वरी ।<br>ऋश्यप्रोक्ता द्वीपिशत्रुर्द्वीपिका खरकण्टका ॥<br>सह[स्र]वीर्याऽभीरुश्च तुङ्गिनो बहुपत्रिका ।<br>महापुरुषदन्ता च शतावर्यूर्ध्वकण्टका ॥<br>पत्र १६२ | शतावरी शतपदी पीवरीन्दीवरी वरी ।<br>ऋश्यप्रोक्ता द्वीपिशत्रुर्द्वीपिका[3] चोर्ध्वकण्टका ॥<br>सहस्रवीर्या भीरुश्च [4]रङ्गिणी बहुपत्रिका ।<br>महापुरुषदन्ता च शतावर्यूर्ध्वकण्टिका ॥<br>वर्ग १ श्लो० २९१-३ पत्र ६६–६७ |
| कटुका मत्स्यशकुला मत्स्यपित्ता च रोहिणी ।<br>कृष्णमेदा चन्द्ररुहा नाम्ना कटुकरोहिणी ॥<br>अशोका रोहिणी तिक्ता चक्राङ्गी शकुलादनी ।<br>कटुरोहिण्यरिष्टा च प्रोक्ता तिक्तकरोहिणी ॥<br>पत्र १६३ | कटुका मत्स्यशकला मत्स्यपित्ता च रोहिणी ।<br>कृष्णमेदा काण्डरुहा नाम्ना कटुकरोहिणी ॥<br>अशोकरोहिणी तिक्ता चक्राङ्गी शकुलादनी ।<br>कटुरोहिण्यरिष्टा च प्रोक्ता तिक्तकरोहिणी ॥<br>वर्ग १ श्लो० ३७-३८ पत्र १४-१५ |

---

१. काकशिम्बी च ञ. छ ॥ २. पापचेलिका क ॥ ३ °का खरकण्टका ॥ ख ॥ ४. तुङ्गिनी ख ङ. च. ण ॥

### निघण्टुशेषटीका

मञ्जिष्ठा कालमेषी च समङ्गा विकसाऽरुणा।
मञ्जुला रक्तयष्टिश्च भण्डी योजनवल्ल्यपि॥
पत्र १६४

मरिचं मलिनं श्यामं वेल्लजं कृष्णमूषणम्।
यवनेष्टं शिरोवृत्तं कोलकं धार्मपत्तनम्॥
पत्र १६५

पिप्पली मागधी कृष्णा चपला तीक्ष्णतण्डुला।
उपकुल्या कणा श्यामा कोला शौण्डी तथोषणा॥
पत्र. १६६

मूलं च पिप्पलीमूलं ग्रन्थिकं चटकाशिरः।
कोलमूलं कटुग्रन्थिः सर्वग्रन्थिकमूलकम्॥
पत्र १६६

चविका कोलवल्ली च चव्यं चवनमेव च।
पत्र १६६

तस्याः फलं विनिर्दिष्टं श्रेयसी हस्तिपिप्पली।
पत्र १६७

अश्वखुरः श्वेतपुष्पी श्वेता च गिरिकर्णिका।
कटभी श्वेतनामा च श्वेतस्यन्दाऽपराजिता॥
नीलपुष्पी महाश्वेता गिरिकर्णी गवादनी।
वेशी चान्युग्रगन्धा च नीलस्यन्दा प्रकीर्तिता॥
पत्र १६८

ऐन्द्रीन्द्रवारुणीन्द्राह्वा इन्द्रैर्वारुर्विषादनी।
गवादनी क्षुद्रफला विशालाक्षी गवाक्ष्यपि॥
पत्र १६८

अन्येन्द्रवारुणी प्रोक्ता विशाला तु महाफला।
आत्मरक्षा चित्रफला तुम्बली त्रपुसी च सा॥
श्वेतपुष्पा मृगाक्षी च मृगेर्वारुर्मृगादनी।
हस्तिदन्ती नागदन्ती वारुणी गजचिर्भिटी॥
पत्र. १६९

शारिवा शारदी गोपी गोपवल्ली प्रतानिका।
गोपकन्या लता सीता श्वेतोक्ता काष्ठशारिवा॥
पत्र १७०

### धन्वन्तरीयनिघण्टु

मञ्जिष्ठा कालमेषी च समङ्गा विकसाऽरुणा।
मञ्जुका रक्तयष्टी च भाण्डी योजनवल्ल्यपि।
वर्ग १ श्लो० १७ पत्र. १०

मरिचं [1]पलितं श्यामं वल्लीजं कृष्णमूषणम्।
यवनेष्टं शिरोवृत्तं कोलकं[2] धर्मपत्तनम्॥
वर्ग २ श्लो० ८८ पत्र ८७

पिप्पली मागधी कृष्णा चपला तीक्ष्णतण्डुला।
उपकुल्या कणा श्यामा कोला शौण्डी तथोषणा॥
वर्ग २ श्लो० ७३ पत्र. ८४

मूलं च पिप्पलीमूलं ग्रन्थिकं[3] चविकाशिरः।
[4]कोलमूलं [5]कटुग्रन्थिः सर्वग्रन्थिकमूषणम्॥
वर्ग २ श्लो० ७५ पत्र. ८४

चविका कोलवल्ली च चव्यं चाविकमेव च॥
वर्ग २ श्लो० ७६ पत्र ८५

तस्याः फलं विनिर्दिष्टं श्रेयसी गजपिप्पली।
वर्ग २ श्लो० ७८ पत्र ८५

[6]अश्वक्षुरः श्वेतपुष्पी श्वेता च गिरिकर्णिका।
[7]कटभी श्वेतनामा च श्वेतस्पन्दाऽपराजिता॥
नीलपु[8]ष्पा महाश्वेता गिरीकर्णी [9]गवादनी।
वल्ली चान्युग्रगन्धा च नीलस्पन्दा प्रकीर्तिता॥
वर्ग ४ श्लो ८४, ८५ पत्र, १५१

ऐन्द्रीन्द्रवारुणीन्द्राह्वाऽथेन्द्रवारुर्मृगादनी।
गवादनी क्षुद्रफला वृषभाक्षी गवाक्ष्यपि॥
वर्ग १ श्लो० २४८ पत्र. ५८

अन्येन्द्रवारुणी प्रोक्ता विशाला च महाफला।
आत्मरक्षा चित्रफला त्रपुसी त्रपुसा च सा॥
श्वेतपुष्पी मृगाक्षी च मृगेर्वारुर्मृगादनी।
हस्तिदन्ती नागदन्ती वारुणी गजचिर्भटा॥
वर्ग १ श्लो० २५०-२५२ पत्र ५८, ५९

सारिवा शारदा गोपा गोपवल्ली प्रतानिका।
गोपकन्या [10]लताऽऽस्फोता श्वेतोक्ता काष्ठ-सारिवा॥
वर्ग १ श्लो० १६१ पत्र. ३८

१ °चं मलिनं श्यामं ग. ङ.॥ २. °कं चर्मपत्रकम् ङ॥ ३. °कं चटिकाशिरः ख ग॥ ४. कौल° ख. ग.॥ ५. कणाग्रन्थि ग॥ ६. अश्वखुरः क ज. ग.॥ ७. कटभिः श्वे° क. ङ.॥ ८. °पुष्पी क. ख. प. ङ.॥ ९. गवादिनी क. ख. ग. ङ.॥ १०. लताऽऽस्फोटा क.॥

## निघण्टुशेषटीका

शारिवाऽन्या कृष्णमूला कृष्णा चन्दनशारिवा ।
भद्रा चन्दनगोपी च चन्दना कृष्णवल्ल्यपि ॥
पत्र. १७०

मूर्वा मधुरसा देवी पृथक्त्वक् पीलुपर्ण्यपि ।
देवश्रेणी स्वादुरसा स्निग्धपर्णी च मोरटा ॥
पत्र १७१

कलिकारी तु हलिनी विशल्या गर्भपातनी ।
लाङ्गल्यग्निमुखी सीरो दीप्ताऽनन्तेन्द्रपुष्पिका ॥
पत्र १७२

गुडूच्यमृतवल्ली च छिन्ना छिन्नरुहाऽमृता ।
छिन्नोद्भवाऽमृतलता धरा वत्सादनी स्मृता ॥
सैवोक्ता सोमवल्ली च कुण्डली चक्रलक्षणा ।
जीवन्ती मधुपर्णी च तन्त्रिका देवनिर्मिता ॥
वयस्था कुण्डली सौम्या विशल्याऽमृतसम्भवा ।
पिण्डामृता बहुच्छिन्ना सा चोक्ता कन्दरोहिणी
रसायनी कुसरुहा स्वरदा ज्वरनाशनी ॥
पत्र १७३

जीमूतको देवताडो वृत्तकोशो गरागरी ।
प्रोक्ताऽऽखुविषहा वेणी देवताडो च ताडकः ॥
पत्र १७३

कोशातकी कृतच्छिद्रा जालिनी कृतवेधना ।
क्ष्वेडा सुतिक्ता घण्टाली मृदङ्गफलिका मता ॥
धामार्गव कोशफलो राजकोशातकी तथा ।
कर्कोटकी पीतपुष्पी महाजाली तथोच्यते ॥
पत्र १७४

क्षीरिणी काञ्चनक्षीरी पटुपर्णी च धर्षणी ।
तिक्तदुग्धा हैमवती हेमदुग्धा हिमावती ॥
स्वर्णक्षीरी स्वर्णदुग्धा सुवर्णक्षीरिकाऽपि च ।
हिमाह्वा कनकक्षीरी हेमक्षीरा च काञ्चनी ॥
पत्र. १७५

द्रवन्ती शम्बरी चित्रा न्यग्रोधी मूषकाह्वया ।
प्रत्यक्श्रेणी वृषा रण्डा पुत्रश्रेण्याखुपर्णिका ॥
पत्र १७६

## धन्वन्तरीयनिघण्टु

सारिवाऽन्या कृष्णमूली कृष्णा चन्दनसारिवा ।
भद्रा चन्दनगोपा तु चन्दना कृष्णवल्ल्यपि ॥
वर्ग १ श्लो० १६२ पत्र ३८

मूर्वा मधुरसा देवी पृथक्पर्णी त्रिपर्ण्यपि ।
देवश्रेणी स्वादुरसा स्निग्धपर्णी च मोरटा ॥
वर्ग १ श्लो० १३ पत्र. ९

कलिकारी तु हलिनी विशल्या गर्भपातिनी ।
लाङ्गल्याऽग्निमुखी सीरी दीप्ता नक्तेन्दुपुष्पिका
श्लो०९ पत्र. १३५

गुडूच्यमृतवल्ली च छिन्ना छिन्नरुहाऽमृता ।
छिन्नोद्भवाऽमृतलता धारा वत्सादनी स्मृता ॥
सैवोक्ता सोमवल्ली च कुण्डली चक्रलक्षणा ।
प्रोक्ता रागकुमारी च च्छिन्नाङ्गी ज्वरनाशिनी ॥
जीवन्ती मधुपर्णी च तन्त्रिका देवनिर्मिता ।
वयस्था मण्डली सौम्या विशल्याऽमृतसम्भवा ॥
पिण्डामृता बहुच्छिन्ना सा चोक्ता कन्दरोहिणी ।
रसायनी मृत्तिका च चन्द्रहासा भिषग्जिता
कन्या कन्दोद्भवा कन्दाऽमृतकन्दा गडूचिका ।
वर्ग १ श्लो० १-५ पत्र. ७-८

जीमूतको [1]देवताडो वृत्तकोशो गरागरी ।
प्रोक्ताऽऽखुविषहा वेणी देवदाली च ताडका ॥
वर्ग १ श्लो ४० पत्र ७-८

कोशातकी कृतच्छिद्रा जालिनी कृतवेधनी ।
क्ष्वेडा सुतिक्ता घण्टाली मृदङ्गफलिका मता ॥
धामार्गव कोशफला राजकोशातकी तथा ।
कर्कोटकी पीतपुष्पा महाजाली निरुच्यते ॥
वर्ग १ श्लो० १९२,१८९ पत्र ४६-४५

क्षीरिणी काञ्चनक्षीरी कटुपर्णी च धर्षिणी ।
तिक्तदुग्धा हैमवती हेमदुग्धा हिमावती ॥
सर्वक्षीरी स्वर्णदुग्धा सुवर्णक्षीरिका[3]ऽपि च ।
[4]हेमाह्वा कनकक्षीरी हेमक्षीरी च काञ्चनी ॥
वर्ग १ श्लो० २४०,२४२ पत्र. ५६,५७

द्रवन्ती शम्बरी चित्रा न्यग्रोधा [5]मूषिकाह्वया ।
प्रत्यक्श्रेणी विषा चण्डा [6]पुत्रश्रेण्याखुपर्णिका ॥
वर्ग १ श्लो० २२९ पत्र ५४

---

१. °ताडो वृत्त° क ताडो गकोशा नागरा गिरा । प्रोक्ता ङ. च ॥
२. °तकी फला क ख. ग ङ. च ॥ ३. °का मना हे° क ङ. ॥ ४. हेमाङ्गा क. ॥
५. मूषका° ङ ॥ ६. पुत्रश्रेण्याखु° क . घ. ङ. च ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
| --- | --- |
| पद्मिनी स्यात् पुटकिनी नलिनी च कुमुद्वती।<br>पलाशिनी पद्मवती वनखण्डं स चाऽऽकरः ॥<br>पत्र १७६ | पद्मिनी स्यात् कुटपिनी नलिनी च कुमुद्वती।<br>पलाशिनी पद्मवती वनेखण्डा सरोहाकु[1] ॥<br>वर्ग ४ श्लो० १५७ पत्र. १६६ |
| बिसं मृणाल बिसिनी मृणाला स्यान्मृणालिका।<br>मृणालं पद्मनालं तु तन्तुलं नलिनीरुहम् ॥<br>पत्र १८० | बिसं मृणालं बिसिनी मृणाली स्यान्मृणालिका।<br>मृणालकं पद्मनालं तण्डुलं नलिनीरुहम् ॥<br>वर्ग ४ श्लो० १६१ पत्र. १६७ |
| पद्मकेसरमापीत किञ्जल्क किञ्जमेव च।<br>मकरन्द तथा तुङ्ग गौरं काञ्चनमेव च ॥<br>पत्र. १८० | पद्मकेसरमापीत किञ्जल्क किञ्जमेव च।<br>मकरन्द तथा तुङ्ग गौर काञ्चनकं च तत् ॥<br>वर्ग ४ श्लो० १६५ पत्र १६७ |
| पद्ममूल तु शालूक शाकल करहाटकम्।<br>शालीन पद्मकन्द तु जलालूकं निगद्यते ॥<br>पत्र १८० | पद्ममूलं तु शालूक सकलं करहाटकम्।<br>शालिन पद्मकन्द च जलालूक निगद्यते ॥<br>वर्ग ४ श्लो० १६३ पत्र १६७ |
| पद्मबीज तु गालोड्य पद्माक्षं पद्मकर्कटी।<br>पत्र १८१ | पद्मबीज तु पद्माक्षं गालोड्यं पद्मकर्कटी।<br>वर्ग ४ श्लो० १५९ पत्र १६२ |
| शतपुष्पा मिसिर्घोषा शिफका माधवा शिफा।<br>अतिच्छत्रा त्ववाक्पुष्पा शताह्वा कारवी स्मृता॥<br>पत्र १८२ | शतपुष्पा मिशिर्घोषा[2] पौतिका[3]माधवी शिफा।<br>[4]अतिच्छत्रा त्वचाक्पुष्पी शताह्वा कारवी स्मृता ॥<br>वर्ग २ श्लो० १ पत्र ६९ |
| कुञ्चिका चोपकुञ्चो च कालिका चोपकालिका।<br>सुषवी कुञ्चिका कुञ्चा पृथ्वी कृष्णे च जीरके<br>पत्र १८३ | उपकुञ्चा चोपकुञ्ची कालिका चोपकालिका।<br>सुषवी[5] कुञ्चिका कुञ्चा[6] पृथ्वीका स्थूलजीरकः॥<br>वर्ग २ श्लो० ५९ पत्र ८१ |
| पलाण्डुर्यवनेष्टश्च सुकन्दो मुखदूषण ।<br>हरण<br>पत्र. १८४ | पलाण्डुर्यवनेष्टश्च सुकन्दो मुखदूषण[7]. ।<br>वर्ग ४ श्लो० ७१ पत्र. १४८ |
| हरणोऽन्य पलाण्डुस्तु लताकों दुर्द्रुमश्च सः।<br>पत्र. १८४ | हरितोऽन्य पलाण्डुश्च लताकों[8] दुद्रुमः स्मृतः<br>वर्ग ४ श्लो० ७१ पत्र १४८ |
| सातला सप्तला सारी विपुला विमलाऽमला।<br>बहुफेना चर्मकसा फेना दीप्ता रसालिका ॥<br>पत्र १८५ | सातला सप्तला सारी विदुला [9]विमलाऽमला।<br>बहुफेना चर्मकषा फेना दीप्ता मरालिका ॥<br>वर्ग १ श्लो० २३८ पत्र. ५६ |
| प्रसारणी सुप्रसरा सरणी सारणी च सा।<br>चारुपर्णी राजबला भद्रपर्णी प्रतानिका ॥<br>पत्र. १८५ | प्रसारणी सुप्रसरा सरणी सारणी च सा।<br>चारुपर्णी राजबला भद्रपर्णी प्रतानिका ॥<br>वर्ग १ श्लो० २८९ पत्र. ६६ |
| वृद्धदारक आवेगी जुङ्गको जीर्णवालकः।<br>अन्त्रः कोटरपुष्पी स्यादजाण्डी छगलाण्डयपि॥<br>पत्र. १८७ | वृद्धदारुक आवेगी जुङ्गको[10] दीर्घवालुकः।<br>वृद्धः कोटरपुष्पी स्यादजान्त्री छागलान्त्र्यपि॥<br>वर्ग ४ श्लो० १०७ पत्र १५५ |

---

१. °खण्डं स चाकरः हैमनिघण्टुशेषटीकोद्धरणे। २. °षा पौतिका क; °षा पोतिका ग. ङ, °षा शाफिका ख ॥ ३. मागधी ग. ॥ ४. आहिच्छत्रा ह्यवाक्° ख. ॥ ५. °कुञ्चीकोपकुञ्ची क्ष. ॥ ६. °वी कारवी कुञ्ची फ. ङ. ॥ ७ °दूषकः ग. घ. ॥ ८. दुद्रुमो मतः ग. ॥ ९. बिन्दुला च. १०. °कोजीर्णवालुकः ज. त. ॥

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
|---|---|
| सुवर्चलाऽऽदित्यकान्ता सूर्यभक्ता सुखोद्भवा । मण्डूकपर्णी मण्डूकी वरदाऽऽदित्यवल्ल्यपि ॥ पत्र. १८७ | सुवर्चलाऽऽदित्यकान्ता सूर्यभक्ता सुखोद्भवा । मण्डूकपर्णी मण्डूकी वरदाऽऽ[1]दित्यवल्ल्यपि ॥ वर्ग ४ श्लो० ९८ पत्र १५३ |
| भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च । अङ्गारको भेकरजो भृङ्गार केशरञ्जन ॥ पत्र. १८८ | भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च । भृङ्गारको भृङ्गरेणुर्भृङ्गार केशरञ्जन ॥ वर्ग ४ श्लो० ११ पत्र १३६ |
| कासमर्दोऽरिमर्दश्च कासारि वर्कशस्तथा । काल कनक इत्युक्त स च स्यात् कासमर्दक ॥ पत्र १८८ | कासमर्दोऽरिमर्दश्च कासारि कर्कशस्तथा । [2]कालः कनक इत्युक्त स च स्यात् कासमर्दक ॥ वर्ग ४ श्लो० ११८ पत्र १५७ |
| जीवन्ती जीवनीया च जीवनी जीववर्धनी । मङ्गल्यनामधया च शाकश्रेष्ठा यशस्करी ॥ पत्र १८९ | जीवन्ती जीवनीया च जीवनी जीववर्धनी । माङ्गल्यनामधया च शाकश्रेष्ठा यशस्करी ॥ वर्ग १ श्लो० १४० पत्र. ३३ |
| क्षुद्राम्लिका तु चाङ्गेरी लोणिका चाम्ललोणिका । लोला लाङ्गा चतुष्पर्णी सैवदन्तशठा मता ॥ पत्र १९० | क्षुद्राम्लिका तु चाङ्गेरी [4]लोणिका चाम्ललोणिका । लोला लोणा चतुष्पर्णी सैव दन्तशठा मता ॥ वर्ग ५ श्लो० ३६ पत्र १७५ |
| तण्डुलीयक उद्दिष्टखण्डाला तण्डुलेरकः । गण्डीरस्तण्डुली बाजो मेघनादो घनस्वन ॥ पत्र १९० | तण्डुलीयक उद्दिष्टस्तण्डुलस्तण्डुलीयकः । भण्डीरस्तण्डुली बीजो मेघनादो घनस्वन ॥ वर्ग ४ श्लो० ११६ पत्र १५७ |
| काकमाची ध्वाङ्क्षमाची काकसाह्वा च वायसी । कट्वी कटुफला चैव रसायनवरा स्मृता ॥ पत्र १९१ | काकमाची ध्वाङ्क्षमाची काकाह्वा चैव वायसी । कट्वी कटुफला चैव रसायनवरा स्मृता ॥ वर्ग ४ श्लो० २१ पत्र १३८ |
| शितिवार सूचिपत्र शैल्या च सुनिषण्णक । श्रीवासक शितिवर स्वस्तिक कटुकः शिखी ॥ पत्र १९१ | शितिवार सूचिपत्र सूच्याह्वः सुनिषण्णक । श्रीवारक शितिवर स्वस्तिक कुक्कुटः शिखी । वर्ग १ श्लो० १५५ पत्र ३६ |
| मूलक हरिपर्ण च वस्तिका क्षारमेव च । नीलकन्द महाकन्द रुचिष्य हस्तिदन्तकम् ॥ पत्र १९२ | मूलकं हरिपर्णं च मृत्तिका क्षारमेव च । नीलकन्द महाकन्द [5]रुचिष्य हस्तिदन्तकम् । वर्ग ४ श्लो० ३३ पत्र १४० |
| चाणक्यमूलक चन्यं वालेय मरुसम्भवम् । शालामर्कटमिश्रं च विष्णुगुप्तमनन्तकम् ॥ पत्र १९२ | चाणाक्यमूलक चान्यच्चालेय मरुसम्भवम् । शालामर्कटकं मिश्रं विष्णुगुप्तं मतं तथा ॥ वर्ग ४ श्लो० ३५ पत्र १४१ |

१ [°]दित्यपर्ण्यपि क. ङ. ॥ २ .कालकण्टक इ[°] त ॥ ३. [°]ल्यमागधेया च क. ङ च ॥ ४. [°]लोटिका क. ङ; [°]लोडिका अ त ॥ ५. रोचिष्यं ग ॥ ६. [°]गुप्तं मलं तथा छ, [°]गुप्तसमं तथा ग. ।

| निघण्टुशेषटीका | धन्वन्तरीयनिघण्टु |
|---|---|
| पटोल कुलक प्रोक्त पाण्डुरः कर्कशच्छद । <br> राजीफल पाण्डुफलो राजमान्योऽमृताफल ॥ <br> पत्र. १९४ | पटोल कुलक प्रोक्त. पाण्डुकः कर्कशच्छद. । <br> राजीफलः पाण्डुफलो राजनामाऽमृताफल. ॥ <br> वर्ग १ श्लो० ४९–५० पत्र. १७ |
| कटुकालाबुनी तुम्बी लम्बा पिण्डफला तथा । <br> इक्ष्वाकु क्षत्रियवरा तिक्तबीजा महाफला ॥ <br> पत्र १९५ | कटुकालाबुनी तुम्बी लम्बा पिण्डफला च सा । <br> इक्ष्वाकु क्षत्रियवरा तिक्तबीजा महाफला ॥ <br> वर्ग १ श्लो०१७० पत्र ३९ |
| जीवक शृङ्गक सर्जो दीर्घायु कूर्चशीर्षक । <br> ह्रस्वाङ्गो मधुर स्वादु प्राणकश्चिरजीव्यपि ॥ <br> पत्र १९६ | जीवक शृङ्गक क्ष्वेडो दीर्घायु कूर्चशीर्षक । <br> ह्रस्वाङ्गो मधुर स्वादु [1]प्राणदश्चिरजीव्यपि ॥ <br> वर्ग १ श्लो० १२३ पत्र. ३० |
| मूल पुष्करमूल च पौष्करं पुष्कराह्वयम् । <br> काश्मीरं पुष्करजटा वीरं तत् पद्मवर्णकम् । <br> पत्र १९६ | मूल पुष्करमूल च पौष्करं पुष्कराह्वयम् ॥ <br> काश्मीर पुष्करजटा [2]वीरं तत्फलपत्रकम् ॥ <br> वर्ग. १ श्लो० ६६ पत्र १९ |
| अजगन्धा खरपुष्पी बस्तगन्धा सुगन्धिका । <br> कबरी बर्बरी गन्धा तुङ्गी पूतिमयूरकः ॥ <br> पत्र १९७ | अजगन्धा खरपुष्पा बस्तगन्धा विगन्धिका । <br> कारवी[3] बर्बरा गन्धा तुङ्गी पूतिमयूरिका ॥ <br> वर्ग१ श्लो० १०० पत्र. ९० |
| बिम्बी रक्तफला तुण्डी तुण्डकेरफला च सा । <br> ओष्ठोपमफला गोल्हा पीलुपर्णी च तुण्डिका ॥ <br> पत्र १९७ | बिम्बी रक्तफला तुण्डी तुण्डिकेरी[4]फला च सा <br> ओष्ठोपमफला[5] गोल्हा पीलुपर्णी च तुण्डिका ॥ <br> वर्ग १ श्लो० २०२ पत्र. ४८ |
| कत्तृण शकलं भूरि पूतीकं रौहिषं मतम् । <br> ध्यामक श्यामक पौरं पुद्गलं देवजग्धकम् ॥ <br> पत्र. १९८ | कत्तृणं सकल भूतिर्भूतिकं रोहिषं तृणम् । <br> ध्यामक श्यामक पौरं पाटलं [6]देवदंशकम् ॥ <br> वर्ग ४ श्लो० ८० पत्र २१ |
| भूस्तृणो रौहिषो भूरिः पूतिकोऽथ कुटुम्बक । <br> मालातृणश्च पालघ्नं छत्रकश्छत्रसंज्ञकः ॥ <br> पत्र १९९ | भूस्तृणो रोहिषो भूतिर्भूतिकोऽथ कुटुम्बक । <br> मालातृणः प्रलम्बश्च छत्रोऽतिच्छत्रक-स्तथा ॥ <br> वर्ग ४ श्लो० ४७ पत्र. १४३ |
| मृदुदर्भं कुशो बर्हि सूची वीरस्तु पत्रक । <br> खरोऽन्य पृथुल. सीरी गुन्द्राह्वो नीरजो निशिः ॥ <br> पत्र. १९९ | मृदुदर्भं कुशो बर्हि [7]शुचिवीरः क्षुरत्तक । <br> [8]खरोऽन्य. पृथुल शीरी गुन्द्रा च नीरजः स्मृतः ॥ <br> वर्ग ४ श्लो० १३३ पत्र. १६१ |
| काश काण्डेक्षुरुद्दिष्ट काकेक्षुर्वायसेक्षुक । <br> इक्ष्वारक इक्षुकाण्डः स चैवेक्षुरक स्मृत ॥ <br> पत्र. २०० | काशः काण्डेक्षुरुद्दिष्टः काकेक्षुर्वायसेक्षुक । <br> इक्ष्वारिकेक्षुकाण्डश्च स चैवेक्षुरकः स्मृत ॥ <br> वर्ग ४ श्लो० ११० पत्र. १६० |

---

१. प्राणदः क्षीरं ख. ॥ २. चिरं ग. ॥ ३. वी तुम्बगन्धा च तुङ्गी क ॥ ४. केशफला क ख. ङ. ॥ ५. फला कोष्णा क. ङ; फला कोह्ला ग. घ. ॥ ६. देव-दण्डकम् क. ख. ॥ ७. शुचिवीरोऽथ क्षुरकः । क. ख, ङ. ॥ ८. स वाम्यः पृ क. ङ ॥

## निघण्टुशेषटीका

**नलो नडो नट**श्चैव स च पोटगल स्मृत ।
धमनो नर्तवो रन्ध्री शून्यमध्यो विभीषण ॥
पत्र. २०१

**शरो** वाण **इक्षुकाण्ड इक्ष्वटः** सायक क्षुर ।
स्थूलोऽन्य इक्षुरः प्रोक्त **इक्ष्वारश्च पिता महः** ॥
पत्र २०२

**नीलो** दूर्वा स्मृता **शस्या** शाड्वलं हरितं तथा ।
शतपर्वा शीतवीर्या **शीतवल्ल्यसिता लता** ॥
पत्र २०३-४

**श्वेतदूर्वा** तु गोलोमी श्वेतद**ण्डी** सिता लता ।
महत्त्ववीर्याऽनन्ता च दुर्मरा भार्गवी रुहा ॥
पत्र २०४

गण्डदूर्वा **तु** गण्डाली नीरा मत्स्याक्षिकाऽपि च ।
**वल्ली** नाडी कलायश्च **धारणी** शकुलाक्षिका ॥
पत्र. २०४

**मुस्तमम्बुधरो** मेघो घनो राजक**शेरु**क ।
भद्रमुस्तो वराहो**ष्ट्रो** गाङ्गेय कुरुविन्दक ॥
पत्र २०५

परिपेल प्लव वन्य गोपुर स्यात् कुटन्नटम् ।
**शत**पुष्पं दाशपुरं गोनर्द जीर्ण**बुध्न**कम् ॥
पत्र २०५

उशीर च मृणाल स्यादभय समगन्धिकम् ।
रणप्रिय वीरतर वार वीरणमूलकम् ॥
पत्र २०६

लामज्जक सुनालं स्यादमृणाल लघं लघु ।
इष्टकापथक **शीतवीर्यं** मूल **जलाशयम्** ॥
पत्र २०७

राजक्षवक **इत्यन्यो** राजिका कृष्णसर्षपः ।
**क्षुताभिजननश्चैव स चोक्तो** राजसर्षप ॥
पत्र २१८

**आसुरी** राजिका राजी **कृमिणका** रक्तसर्षप ।
तीक्ष्णगन्धा चातितीक्ष्णा क्षुरक क्षुवक क्षव ॥
पत्र २१८

## धन्वन्तरीयनिघण्टु

**नडो नटो नल**श्चैव स च पोटगल स्मृत ।
धमनो नर्तवो रन्ध्री शून्यमध्यो विभीषण ॥
वर्ग ४ श्लो० १४१ पत्र १६२

शरो वाण **इषुः काण्ड उत्कटः** सायक क्षुर ।
स्थूलोऽन्य **इक्षुकः** प्रोक्त **इक्षुरश्चापि नामतः** ॥
वर्ग ४ श्लो० १३५ पत्र १६१

**नीलदूर्वा** स्मृता **शष्पं** [१]शाड्वलं हरित तथा ।
शतपर्वा शीतवीर्या **शतवल्ल्यपि शीतला** ॥
वर्ग ४ श्लो० १४३ पत्र १६३

श्वेतदूर्वा तु गोलोमी श्वेतद**ण्डा** [३]सिता लता ।
सहस्रवीर्याऽनन्ता च दुर्मरा भार्गवी रुहा ॥
वर्ग ४ श्लो० १४४ पत्र १६३

गण्डदूर्वा **च** गण्डाली नीरा मत्स्याक्षिकाऽपि च ।
[४]**बह्ली** नाडी कलापश्च **वारुणी** शकुलाक्षिका ॥
वर्ग ४ श्लो० १४५ पत्र १६३

[५]**मुस्ता वाम्बुधरो** मेघो घनो राज**कसेरु**क ।
भद्रमुस्तो वराहोऽ**ब्दो** गाङ्गेय कुरुविन्दक ॥
वर्ग १ श्लो० ४० पत्र १५

परिपेलं प्लव वन्य गोपुर स्यात् **कुटन्नटम्** ।
**सित**पुष्प दासपुर गोनर्द जीर्ण**पुष्पकम्** ॥
वर्ग ३ श्लो० ५० पत्र १०७

उशीरं च मृणाल स्यादभयं समगन्धिकम् ।
रणप्रियं वीरतर वीरं वीरणमूलकम् ॥
वर्ग ३ श्लो० १४ पत्र. ९६

लामज्जक सुनाल स्यादमृणाल **लवं** लघु ।
इष्टकापथक **शीघ्रं दीर्घमूलं** **जलाश्रयम्** ॥
वर्ग ३ श्लो० ८६ पत्र ११३

राजक्षवक **इत्युक्ता** राजिका कृष्णसर्ष**पा** ।
क्षु**धाभिजनका चैव सा चोक्ता** राजसर्षप. ॥
वर्ग ४ श्लो० ४१ पत्र १४३

आसुरी राजिका राजी **कृष्णका** रक्तसर्षप ।
तीक्ष्णगन्धा चातितीक्ष्णा क्षु**धक क्षवक** क्षव ॥
वर्ग ४ श्लो० ६० पत्र. १४६

---

१. **शाड्वलं** क ग. घ. ङ छ. ण त. ॥ २. **वल्ली च शीतला** क ॥ ३. **सिता** क. ख. ग. ङ ॥ ४. **बाह्ली** ण ॥ ५. **मुस्तमम्बुधरो** ग. ङ च. छ ॥